वञ्चनेच्छा विप्रलिप्सा, ययाऽशिष्ये[1] स्वज्ञातो[2]ऽप्यर्थो न प्रकाश्यते। इन्द्रियमान्द्यं करणापाटवम्, येन दत्तमनसापि यथावत् वस्तु न परिचीयते। एते प्रमातृजीवदोषाः प्रमाणेषु सञ्चरन्ति। तेषु भ्रमादित्रयं प्रत्यक्षे, तन्मूलकेऽनुमाने च; विप्रलिप्सा तु शब्दे इति बोध्यम्। प्रत्यक्षादीन्यष्टौ[3] भवन्ति प्रमाणानि। तत्रार्थसन्निकृष्टं चक्षुरादीन्द्रियं

---

[1] C, D, E read यया शिष्ये. A reads यथा शिष्ये and B reads यथाशिष्ये. The reading यया is preferred in consistency with the other clauses which begin as येन स्थाणौ, येनान्तिके, येन दत्तमनसापि. We think that ययाशिष्ये was the original reading and this has wrongly been separated as यया शिष्ये instead of as यया अशिष्ये. It is inconceivable that the *guru* deceives his disciple.

[2] The word स्व in स्वज्ञात seems to be of no use. There is a pencil correction in a copy of an edition as सु for स्व, which definitely improves the meaning.

[3] SS has referred to ten *pramāṇas*—"प्रत्यक्षानुमानशब्दार्षोपमानार्थापत्त्यभावसम्भवैतिह्यचेष्टाख्यानि दश प्रमाणानि विदितानि" (P. 5). Although he has not defined all these pramāṇas, he has made us acquainted with these as follows :—"प्रत्यक्षं तावद् मनोबुद्धीन्द्रियपञ्चकजन्यतया षड्विधं भवेत्।....प्रतिज्ञाहेतूदाहरणोपनयनिगमनाभिधपञ्चाङ्गमनुमानम्।....यो निजनिजविद्वत्तायै सर्वैरेवाभ्यस्यते, यस्याधिगमेन सर्वेषामपि सर्वत्र विद्वत्ता भवति, यत्कृतयैव परमविद्वत्तया प्रत्यक्षादिकमपि शुद्धं स्यात्, यश्चानादित्वात् स्वयमेव सिद्धः, स एव निखिलैतिह्यमूलरूपो महावाक्यसमुदायः शब्दोऽत्र गृह्यते। स च शास्त्रमेव, तच्च वेद एव।....देवानामृषीणां च वचनमार्षम्।....गोसदृशो गवय इति ज्ञानमुपमानम्।....पीनत्वमहन्यभोजिनि नक्तं भोजित्वं गमयति, अर्थापत्तिप्रमाणम्।....घटाभावे प्रमाणं तदनुपलब्धिरूपोऽभाव एव।....सहस्रे शतं सम्भवतीति बुद्धौ सम्भावनं सम्भवः।....अज्ञातवक्तृकतागतपारम्पर्यप्रसिद्धमैतिह्यम्।....अङ्गुल्युत्तोलनतो घटदशकादिज्ञानं च चेष्टेति।"

SS has devoted much attention to Śabdapramāṇa. The contention of Śrijiva is that Śabda i. e. the Veda is eternal and is not dependent upon anything. It is free from any blemish as error, inattention, deception or unskilfulness of the

प्रत्यक्षम् । "अनुमितिकरणमनुमानम्", (तर्कसंग्रह, २५ पृः, निर्णयसागर सं) अग्न्यादिज्ञानमनुमितिः, तत्करणं धूमादिज्ञानम् । "आप्तवाक्यं शब्दः", (तर्क-संग्रह, ३६ पृः) । "उपमितिकरणमुपमानम्" ( तर्कसंग्रह, ३५ पृः ) गो-सदृशो गवय इत्यादौ "संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः" (तर्कसंग्रह, ३५ पृः), तत्करणं सादृश्यज्ञानम् ।

असिध्यदर्थंदृष्ट्या साधकान्यार्थकल्पनमर्थापत्तिः, यया[1] दिवाऽभुञ्जाने पीनत्वं रात्रिभोजनं कल्पयित्वा साध्यते । अभावग्राहिकाऽनुपलब्धिः, भूतले घटानुपलब्ध्या यथा घटाभावो गृह्यते । सहस्रे शतं सम्भवेदिति बुद्धौ सम्भावना सम्भवः । अज्ञातवक्तृकं परम्पराप्रसिद्धमैतिह्यम्, यथेह तरौ यक्षोऽस्ति । इत्येवमष्टौ ॥९॥

ततस्तानि न प्रमाणानीत्यनादिसिद्धसर्वपुरुषपरम्परासु सर्व-लौकिकालौकिकज्ञाननिदानत्वादप्राकृतवचनलक्षणो वेद एवास्माकं सर्वातीतसर्वाश्रयसर्वाचिन्त्याश्चर्यस्वभावं वस्तु विविदिषतां प्रमाणम् ॥१०॥

श्रीबलदेवविद्याभूषणकृता टीका ।

ततस्तानि न प्रमाणानीति । ततो भ्रमादिदोषयोगात्, तानि प्रत्यक्षादीनि परमार्थप्रमाकरणानि न भवन्ति । मायामुण्डावलोके 'तस्यैवेदं मुण्डम्' इत्यत्र प्रत्यक्षं व्यभिचारि । दृष्ट्या तत्कालनिर्वापितवह्नौ गिरौ धूमप्रोद्गारिणि

---

instruments since no human being produces it. This is eternal knowledge and other pramāṇas are valid only if they are not inconsistent with it. But Śabda has unconditional validity. SS has steered clear of all the charges against the validity of the Vedas. But most of these problems and their solutions have very well been dealt with by Sāyaṇācārya in his Ṛgvedabhāṣyopakramaṇikā. Śrījīva is very particular about the exposition of this paragraph and in this discourse he has utilised all the doctrines of the Advaitins freely and sometimes literally, although this treatise is mainly designed to pulverize the Advaita concept of Self and Reality.

1. v. l. यथा—A.

गिरौ 'वह्निमान् धूमात्' इत्यनुमानञ्च व्यभिचारि दृष्टम् । आप्तवाक्यञ्च तथा, एकेनाप्तेन मुनिना समर्थितस्यार्थस्यापरेण तादृशेन दूषितत्वात् । अत उक्तम्—'नासावृषिर्यस्य मतं न भिन्नम्' इति ।

एवं मुख्यानामेषां सदोषत्वात् तदुपजीविनामुपमानादीनां तथात्वं सुसिद्धमेव । किञ्चाप्तवाक्यं लौकिकार्थग्रहे प्रमाणमेव, यथा 'हिमाद्रौ हिमम्' इत्यादौ ।[1] तदुभयनिरपेक्षञ्च तत् 'दशमस्त्वमसि' इत्यादौ ।[2] तदुभयागम्ये साधकतमञ्च तत्, ग्रहाणां राशिषु सञ्चारे यथा ।[3] किञ्चाप्तवाक्येनाननुगृहीतं तदुभयं प्रमापकम् । दृष्टचरमायामुण्डकेन पुंसा सत्येऽप्यविश्वस्ते तस्यैवेदं मुण्डमिति नभोवाण्याननुगृहीतं प्रत्यक्षं यथा । 'अरे शीतार्ताः पान्था मास्मिन्नग्निं सम्भावयत, वृष्ट्या निर्वाणोऽत्र स[4] दृष्टः किन्त्वमुष्मिन् धूमोद्गारिणि गिरौ सोऽस्ति' इत्याप्तवाक्येनानुगृहीतमनुमानं च यथेति ।[5] तदेवं प्रत्यक्षानुमानशब्दाः प्रमाणानीत्याह मनुः—

"प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥" इति । (मनु १२।१०५)

एवमस्मद्वृद्धाश्च । सर्वपरम्परासु ब्रह्मोत्पन्नेषु देवमानवादिषु सर्वेषु वंशेषु ।

---

[1] The words of a reliable person (āpta) is often corroborated by perception as in the statement –"There is snow in the Himālaya".

[2] There are occasions when testimony is a *pramāṇa* even without having the support of perception or inference. For instance, when a person counts his friends and forgets to count himself, he may be helped in the discovery of the tenth man by the simple words—"Thou art the tenth." Here no further perception or inference is necessary for the revelation of the tenth.

[3] Testimony has also some exclusive scope where other instruments of knowledge (pramāṇas) are of no avail. For example, the influence of a particular planet on a person for its journey from one *rāśi* to the other is known only from Jyotiṣaśāstra.

[4] 'सः' is dropped in some editions.

[5] Here BD substantiates that perception and inference are valid only when they are supported by testimony. By seeing a head one cannot be sure whether it is a magical feat

"परम्परा परीपाट्यां सन्तानेऽपि वधे क्वचित् ।" इति विश्वः । लौकिकज्ञानं कर्मविद्या, अलौकिकज्ञान ब्रह्मविद्या । अप्राकृतेति—"वाचा विरूप नित्यया" इति मन्त्रवर्णात् ( ऋक् सं ८।७५।६),

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ॥
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥" इति स्मरणाच्च ।

(महाभारत, शान्तिपर्व, २३१।५६-५७, वङ्गवासी सं)[1] । स्फुटमन्यत् ॥१०॥

तच्चानुमतं "तर्काप्रतिष्ठानात्" ( ब्र० सू० २।१।११ )[2] इत्यादौ, "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्"[3] ( महाभारत, भीष्मपर्व ५।१२) इत्यादौ, "शास्त्रयोनित्वात्"[4]

---

or an actual phenomenon ; only testimony of a reliable person can produce a decisive judgment. Similarly the smoke emitted from a hill cannot prove the existence of fire because in the meanwhile fire might have been extinguished by rain. But a person who knows that there is still fire can testify and then only the inference will be valid.

[1] In Baṅgavāsī edition the reading varies in three words but the sense is the same. It is an oftquoted śloka in connexion with the eternal nature of the Vedas. Śaṅkara quotes it under Brahmasūtra 1.3.28.

[2] The full aphorism is—"तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः" ।

[3] Śaṅkara quotes the entire śloka under Br. Sū. 2.1.27—

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥

[4] In the interpretation of this sūtra RG follows Śaṅkarācārya who has expounded शास्त्रयोनि as शास्त्रस्य योनिः कारणम् (i.e. Śāstra originates from Brahman) and शास्त्रं योनिः प्रमाणमस्य ( i.e. the knowledge of Brahman is to be obtained from Śāstra.)

(बृ० सू० १।१।३) इत्यादौ, "श्रुतेस्तु शब्दमूलत्वात्" (ब्र० सू० २।१।२७) इत्यादौ, "पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर। श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि॥" (भा० ११।२०।४) इत्यादौ ॥११॥

श्रीबलदेवविद्याभूषणकृता टीका।

ननु कोऽयमाग्रहो वेद एवास्माकं प्रमाणमिति चेत्तत्राह तच्चानुमतमिति, श्रीव्यासाद्यैरिति शेषः। तद्वाक्यान्याह, तर्केत्यादीनि साध्यसाधनयोरपीत्यन्तानि। तर्केति ब्रह्मसूत्रखण्डः। तस्यार्थः—परमार्थनिर्णयस्तर्केण न भवति, पुरुषबुद्धिवैविध्येन तस्य नष्टप्रतिष्ठत्वात्। एवमाह श्रुतिः "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ।" (कठ १।२।९) इति। "व्याप्यारोपेण व्यापकारोपस्तर्कः" (तर्कसंग्रह, ४० पृः) 'यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यात्' इत्येवंरूपः। स च व्याप्तिशङ्कां निरस्यन्ननुमानाङ्गं भवेदतस्तर्केणानुमानं ग्राह्यमिति। "अचिन्त्याः" इत्युद्यमपर्वणि[1] दृष्टम्। "शास्त्रे"ति ब्रह्मसूत्रम्। 'न' इत्याकृष्यम्[2]। उपास्यो हरिरनुमानेनोपनिषदा वा वेद्य इति सन्देहे "मन्तव्यः" (बृ० उ० ४।५।६) इति श्रुतेरनुमानेन स वेद्य इति प्राप्ते नानुमानेन वेद्यो हरिः। कुतः? शास्त्रमुपनिषद् योनिर्वेदनहेतुर्यस्य तत्त्वात्। "औपनिषदं पुरुषं पृच्छामि" (बृ० उ० ३।९।२६) इत्याद्या हि श्रुतिः। "श्रुतेस्तु" इति ब्रह्मसूत्रम् (२।१।२७)।

---

[1] In fact this śloka is in Bhiṣmaparvan (5.12) and not in Udyamaparvan. But *Bhaktirasāmṛtasindhu* quotes the same with the introduction "यथोक्तमुद्यमपर्वणि" (P.592-93, Murshidabad ed.)

[2] शास्त्रयोनित्वाद् (ब्र: सू: १।१।३) precedes ईक्षतेर्नाशब्दम् (१।१।५) and BD, in his *Govindabhāṣya*, explains the former by anticipating (आकृष्य) the particle नञ् from the latter. Thus the meaning is that Bhagavān is not capable of being inferred.

'न' इत्यनुवर्त्तते[1]। ब्रह्मणि कर्त्तरि लोकदृष्टाः श्रमादयो दोषा न स्युः। कुतः ? "सोऽकामयत बहु स्यां प्रजायेय" (तैः उः २।६।१) इति सङ्कल्पमात्रेण निखिलसृष्टिश्रवणात्। ननु श्रुतिर्बाधितं कथं ब्रूयादिति चेत्तत्राह शब्देति। अविचिन्त्यार्थस्य शब्दैकप्रमाणकत्वात्। दृष्टञ्चैतन्मणिमन्त्रादौ। "पितृदेव" इत्युद्धवोक्तिरेकादशे[2]। हे ईश्वर, तव वेदः पित्रादीनां श्रेयः[3] श्रेष्ठं चक्षुः। क्वेत्याह—अनुपलब्धेऽर्थे इत्यादि। तथा च वेद एवास्माकं प्रमाणमिति मद्वाक्यं सर्वसम्मतमिति नापूर्वं मयोक्तम् ॥११॥

तत्र च वेदशब्दस्य सम्प्रति दुष्पारत्वाद्[4] दुरधिगमार्थत्वाच्च तदर्थनिर्णायकानां मुनीनामपि[5] परस्परविरोधाद् वेदरूपो वेदार्थनिर्णायकश्चेतिहासपुराणात्मकः शब्द एव विचारणीयः। तत्र च

---

[1] The word 'न' follows from a previous *sūtra* "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" (2.1.24). cf. "उपसंहारसूत्रान्नेत्यनुवर्त्तते" (Govindabhāṣya, 2.1.27).

[2] Eleventh chapter of Bhāgavata; ११।२०।४

[3] ईयसुन् is in place of इष्ठन्; so BD glosses श्रेयः श्रेष्ठम्।

[4] There is no end to the extent of the Vedas. Some of the branches of the Vedas are lost and some often remain hidden (उत्सन्न-प्रच्छन्न)। Patañjali, the author of Mahābhāṣya, has referred to the 21 branches of Ṛgveda, 101 branches of Yajus, 1000 branches of Sāmaveda and 9 branches of Atharvaveda. (cf. एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः—७१ पृः, निर्णयसागर सं) But in Muktikopaniṣad a larger number of the branches of the Vedas is mentioned. (cf. ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः। नवाधिकशतं शाखा यजुषो मारुतात्मज॥ सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप। अथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे॥ १२, १३)

[5] viz. Vyāsa, Kaṇāda, Gotama etc.

यो वा वेदशब्दो नात्मविदितः[1] सोऽपि तद्दृष्टयानुमेय एवेति सम्प्रति तस्यैव प्रमोत्पादकत्वं स्थितम्। तथाहि महाभारते मानवीये[2] च—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।" (महाभारत, आदि, १।२६७) इति, "पूरणात् पुराणम्" इति चान्यत्र। न चावेदेन वेदस्य बृंहणं सम्भवति, न ह्यपरिपूर्णस्य कनकवलयस्य त्रपुणा पूरणं युज्यते। ननु यदि वेदशब्दः पुराणमितिहासञ्चोपादत्ते, तर्हि पुराण[3]मन्यद[4]न्वेषणीयम्। यदि तु न, न तर्हीतिहासपुराणयोरभेदो वेदेन। उच्यते—विशिष्टैकार्थप्रतिपादकपदकदम्बस्यापौरुषेयत्वादभेदेऽपि स्वरक्रमभेदाद्[5] भेदनिर्देशोऽप्युपपद्यते। ऋगादिभिः सममनयोरपौरुषेयत्वेनाभेदो माध्यन्दिनश्रुतावेव व्यज्यते—"एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्, यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्" (बृ० उ० २।४।१०) इत्यादिना ॥१२॥

---

[1] It should be expounded as आत्मना विदितः. Due to the loss or concealment of many branches, some Vedic injunctions are not self-revealed. These are known only from the Smṛtis and Purāṇas.

[2] No such expression is found in Manusaṃhitā.

[3] v. l. पुराणादिकम् in A (f. n.)

[4] RG reads अन्यवद् for अन्यद्. Then the meaning is—If the celebrated Itihāsas and Purāṇas are included in the Vedas, the Itihāsas and Purāṇas—different from the Vedas—are yet to be found out like the lost and hidden portions (अन्यवद्) of the Vedas.

[5] Although the Itihāsas and the Purāṇas are eternal like the Vedas, still there are two points of difference. (i) The Vedas have accents (स्वर) as *udātta*, *anudātta* and *svarita* but the others have no such accents. (ii) These two groups have different order of words and sentences (आनुपूर्वी or क्रम). One group (वेद) has such an order of words as should not be

श्रीबलदेवविद्याभूषणकृता टीका ।

एवं चेदृगादिवेदेनास्तु परमार्थविचारः । तत्राह—तत्र च वेदशब्दस्येति । तर्हि न्यायादिशास्त्रैर्वेदार्थनिर्णेतृभिः सोऽस्त्वीति चेत्तत्राह—तदर्थनिर्णायकानामिति । तस्यैवेति—इतिहासपुराणात्मकस्य वेदरूपस्येत्यर्थः । समुपबृंहयेदिति—वेदार्थं स्पष्टीकुर्यादित्यर्थः । पुराणादिति—वेदार्थस्येति बोध्यम् । त्रपुणा—सीसकेन । पुराणेतिहासयोर्वेदरूपतायां कश्चिच्छङ्कते—नन्वित्यादिना । तत्र समाधत्ते—उच्यत इत्यादिना । निखिलशक्तिविशिष्टभगवद्रूपैकार्थप्रतिपादकं यत् पदकदम्बमृगादिपुराणान्तं तस्येति । ऋगादिभागे स्वरक्रमो[1]ऽस्ति, इतिहासपुराणभागे तु स नास्तीत्येतदंशेन भेदः । "एवं वा" इति मैत्रेयीं पत्नीं प्रति याज्ञवल्क्यवचनम् । अरे मैत्रेयि, अस्येश्वरस्य महतो विभोः पूज्यस्य वा भूतस्य पूर्वसिद्धस्य । स्फुटार्थमन्यत् ॥१२॥

अतएव स्कान्दप्रभासखण्डे (२।३-५)—

"पुरा तपश्चचारोग्रममराणां पितामहः ।
आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः[2] ॥

---

heard or read by the Śūdras whereas the other group ( इतिहास, पुराण) has an order capable of being only heard and not read by the Śūdras. This is thus interpreted by RG but BD is perhaps mistaken in apprehending स्वरक्रम to be one single entity. (*cf.* ऋगादिभागे स्वरक्रमोऽस्ति....)

[1] The singular number in स्वरक्रमः shows that BD thinks it to be a single entity, and not as स्वर & क्रम.

[2] The six *aṅgas* (limbs) of the Vedas are the ancillary literature. One has to know these six branches of learning in order to understand the Vedas properly. These are—*śikṣā*, *kalpa*, *chandas*, *jyotiṣa*, *nirukta* and *Vyākaraṇa*. *Pada* means the Pada-text (पदपाठ) and *krama*, the Krama-text ( क्रमपाठ ) of the Vedas. In the Pada-text the words have been separated and the compounds also have in most cases been analysed. This is essential for understanding the meaning of the Vedas. In Krama-pāṭha the words are taken in twos and the next pair begins with the final word of the previous pair. It may be represented by symbols as—ab bc cd etc. There are other texts of the mantras. They are being illustrated only with

ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ।
नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ।
निर्गतं ब्रह्मणो वक्त्रात्[1]तस्य भेदान्निबोधत ॥
ब्राह्मचं पुराणं प्रथमम्" इत्यादि ।

अत्र शतकोटिसंख्या ब्रह्मलोके प्रसिद्धेति तथोक्तम् । तृतीयस्कन्धे च "ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।" ( भाः ३।१२।३७ ) इत्यादिप्रकरणे "इतिहासपुराणानि पञ्चमं वेदमीश्वरः । सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥" ( भाः ३।१२।३९) इति । अपि चात्र साक्षादेव वेदशब्दः प्रयुक्तः पुराणेतिहासयोः । अन्यत्र च "पुराणं पञ्चमो वेदः ।" "इतिहासः पुराणञ्च पञ्चमो वेद उच्यते ।" ( भा० १।४।२० ) "वेदानध्यापयामास महाभारतपञ्चमान्[2]॥" (महाभारत, मोक्षधर्म, ३४०।११ ) इत्यादौ । अन्यथा" "वेदान्" इत्यादावपि पञ्चमत्वं

---

symbols :—(i) *Jaṭā*—ab ba ab, bc cb bc etc. (ii) Mālā—abfe, bced, cddc, deeb, efba etc. (iii) Lekhā—ab ba ab, bcd deb bc cd etc. (iv) Śikhā—ab ba abc, bc cb bcd etc. (v) Dhvaja—ab bc cd....cd bc ab etc. (vi) Daṇḍa—ab ba ab, bc cba etc. (vii) Ratha—ab bc, cd dc ab etc. (viii) Ghana—ab ba abc cba abc, bc cb bcd dcb bcd etc.

The majority of the orthodox scholars thinks that these are later devices for preserving the mantras from even a slight change.

[1]. Here the reading of Skandapurāṇa (edited by P. Tarkaratna) differs to a great extent. We quote this śloka from Sk. Purāṇa—निर्गतं ब्रह्मणो वक्त्राद् ब्राह्मं वैष्णवमेव च । शैवं भागवतं चैव भविष्यं नारदीयकम् ॥ ( २ अध्याय, ५ श्लोक )

[2] It is queer to note that with this very instance the Advaitins seek to establish that on some occasions the number of the different entities forming a group may be enhanced by something not belonging to that group. The Advaitins observe that the number of the Vedas may be increased by including a non-Veda work, Mahābhārata. ( *cf.* वेदानध्यापयामास महाभारतपञ्चमानित्यादौ वेदगतपञ्चत्वसंख्याया अवेदेनापि भारतेन पूरणदर्शनात्—वेदान्तपरिभाषा, ४५ पृः, वेङ्कटेश्वर सं )

नावकल्पेत, समानजातीयनिवेशितत्वात् संख्यायाः। भविष्यपुराणे "कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम्।" इति। तथा च सामकौथुमीयशाखायां छान्दोग्योपनिषदि च[1]— "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं[2] पुराणं पञ्चमं वेदानां वेदम्।" (छाः उः ७।१।२) इत्यादि। अतएव "अस्य महतो भूतस्य" ( बृः उः २।४।१० ) इत्यादावितिहासपुराणयोश्चतुर्णामिवान्तर्भूतत्वकल्पनया प्रसिद्धप्रत्याख्यानं निरस्तम्[3]। तदुक्तं[4] "ब्राह्मं पुराणं प्रथमम्" इत्यादि ॥१३॥

---

1 The particle च is twice met with in this sentence. This gives rise to the meaning that two more quotations are being referred to, though this is not the case. We believe that the latter particle is a subsequent addition by the scribes, who have deemed सामकौथुमीयशाखा and छान्दोग्योपनिषद् separate treatises. It seems that JG thinks छान्दोग्योपनिषद to be under कौथुमीयशाखा. And this is the widely accepted view. But there is a group of scholars who includes छान्दोग्योपनिषद् in तलवकार-शाखा.

2 All the printed editions of TS read इतिहासं पुराणम् whereas the reading met with in छान्दोग्योपनिषद् is इतिहासपुराणम्.

3 The Vaiṣṇavas try to establish the eternal nature of the Itihāsas and the Purāṇas with the help of this Śruti viz. अस्य महतो भूतस्य....इतिहासः पुराणम् ( Bṛ. U. 2. 4. 10. ). But Śaṅkarācārya explains that some portions of the Vedas are of the types of इतिहास & पुराण and only those portions have been referred to in this Śruti. Thus the celebrated Itihāsas and Purāṇas, written by Vyāsa, are not mentioned there as eternal. This contention of the Advaitins is being smashed to smithers by JG by quoting authority from the Purāṇas where some of the Purāṇas have been referred to, by their names, as originating from the mouth of the grandfather Brahmā along with the four Vedas. In Chāndogya Upaniṣad (7.1-2) also the Itihāsa and the Purāṇa are called the fifth Veda.

4 RG reads तथोक्तम्।

श्रीबलदेवविद्याभूषणकृता टीका ।

पुरेत्यादौ वेदानां पुराणानाञ्चाविर्भाव उक्तः । 'ससृजे' आविर्भावयामास । समानेति यज्ञदत्तपञ्चमान् विप्रानामन्त्रयस्वेतिवत् । कार्ष्णमिति कृष्णेन व्यासेनोक्तमित्यर्थः । अतएवेति पञ्चमवेदत्वश्रवणादेवेत्यर्थः । चतुर्णामेवान्तर्भूतत्वेति भगवन्निःश्वसितभूते ये इतिहासपुराणे ते चतुर्णामेवान्तर्गते । 'तेष्वेव यत् पुरावृत्तं, यच्च पञ्चलक्षणमाख्यानं, ते एव तद्भूते ग्राह्ये ; न तु ये व्यासकृतत्वेन भुवि ख्याते शूद्राणामपि श्रव्ये' इति कर्मठैर्यत् कल्पितं तन्निरस्तमित्यर्थः ॥१३॥

पञ्चमत्वे कारणञ्च वायुपुराणे सूतवाक्यम्—

इतिहासपुराणानां वक्तारं सम्यगेव हि ।
माञ्चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ॥१६॥
एक आसीद् यजुर्वेदस्तं चतुर्धा व्यकल्पयत् ।
चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥१७॥
आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च ।
औद्गात्रं सामभिश्चैव ब्रह्मत्वञ्चाप्यथर्वभिः ॥१८॥
... ... ...
आख्यानैश्चाप्युपाख्यानैर्गाथाभिर्द्विजसत्तमाः ।
पुराणसंहिताश्चक्रे पुराणार्थविशारदः ॥ २१ ॥
यच्छिष्टं तु यजुर्वेद इति शास्त्रार्थनिर्णयः[1] ।

( वायुपुराण, ६० अध्याय, १६-२२ श्लोक ) । इति ब्रह्मयज्ञाध्ययने च विनियोगो दृश्यतेऽमीषाम् "यद्ब्राह्मणानीतिहासपुराणानि" इति । सोऽपि नावेदत्वे सम्भवति । अतो यदाह भगवान् मात्स्ये—

[1] In printed editions of वायुपुराण we find इतिहासपुराणस्य.... उद्गात्रं सामभिश्चक्रे...द्विजसत्तमः...पुराणसंहिता...यजुर्वेदे तेन यज्ञमथायुजत् । युञ्जानः स यजुर्वेद इति शास्त्रविनिश्चयः ॥ The word यजुर्वेद occurs twice in the 22nd śloka—once in the first quarter and next in the third. This has created a confusion and by divergent suggestion the second and the third quarters are found omitted in the editions of TS.

"कालेनाग्रहणं मत्वा पुराणस्य द्विजोत्तमाः[1]।।८।।
व्यासरूपमहं कृत्वा संहरामि युगे युगे"। (मत्स्य ५३।८-९)

इति। पूर्वसिद्धमेव पुराणं सुखसंग्रहणाय सङ्कलयामीति तत्रार्थः। तदनन्तरं ह्युक्तम्--

"चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।।९।।
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते।
अद्याप्यमर्त्यलोके तु शतकोटिप्रविस्तरम् ।।१०।।
तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशितः[2]।"

(मत्स्य ५३।९--११) इति। अत्र तु "यच्छिष्टं तु यजुर्वेदे"[3] इत्युक्तत्वात्तस्याभिधेयभागश्चतुर्लक्षस्त्वत्र मर्त्यलोके संक्षेपेण सारसंग्रहेण निवेशितः, न तु रचनान्तरेण ।।१४।।

श्रीबलदेवविद्याभूषणकृता टीका।

पञ्चमत्वे कारणञ्चेति। ऋगादिभिश्चतुर्भिश्चातुर्होत्रं चतुर्भिर्ऋत्विग्भिर्निष्पाद्यं कर्म भवति, इतिहासादिभ्यां तन्न भवतीति तद्भागस्य पञ्चमत्वमित्यर्थः। आख्यानैः पञ्चलक्षणैः[4] पुराणानि। उपाख्यानैः पुरावृत्तैः, गाथाभिश्छन्दोविशेषैश्च, संहिता भारतरूपाश्चक्रे। ताश्च "यच्छिष्टं तु

---

[1] Reading of मत्स्यपुराण—···ग्रहणं दृष्ट्वा···स्य ततो नृप।

[2] Variants in मत्स्यपुराण—···सदा ।। तथाष्टा···भूलोके··· प्रकाश्यते। अद्यापि देवलोकेऽस्मिन्···चतुर्लक्षं···।

[3] As the reading of TS goes, the *sandhi* may be disjoined as यजुर्वेदे इति or यजुर्वेदः इति. The interpretation of RG seems to be in favour of यजुर्वेदः इति. But a check up of the original would have put an end to such doubts since it reads as यजुर्वेदे तेन यज्ञमथायुजत्.

[4] The five characteristics of Purāṇa have been enumerated in many places in the Purāṇas. The readings also vary widely. We quote here one—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुवंशचरितं पुराणं पञ्चलक्षणम् ।।(स्कन्द, प्रभास, २८१)

यजुर्वेदे" तद्रूपा इत्यर्थः। ब्रह्मेति। ब्रह्मयज्ञे वेदाध्ययनेऽपीपामितिहासादीनां विनियोगो दृश्यते। सोऽपि विनियोगस्तेषामवेदत्वे न सम्भवति। कृत्वाऽविर्भाव्य। सङ्कलयामि संक्षिपामि। अभिधेयभागः सारांशः ॥१४॥

तथैव दर्शितं वेदसहभावेन शिवपुराणस्य वायवीयसंहितायाम्—

"संक्षिप्य चतुरो वेदांश्चतुर्धा व्यभजत् प्रभुः।
व्यस्तवेदतया ख्यातो वेदव्यास इति स्मृतः ॥
पुराणमपि संक्षिप्तं चतुर्लक्षप्रमाणतः।
अद्याप्यमर्त्यलोके तु शतकोटिप्रविस्तरम्[1] ॥"

(१।३३–३४) इति।

संक्षिप्तमित्यत्र तेनेति शेषः। स्कान्दमाग्नेयमित्यादिसमाख्यास्तु प्रवचननिबन्धनाः काठकादिवत्, आनुपूर्वीनिर्माणनिबन्धना वा[2]। तस्मात् क्वचिदनित्यत्वश्रवणं त्वाविर्भावतिरोभावापेक्षया[3]। तदेवमितिहासपुराणयोर्वेदत्वं सिद्धम्। तथापि सूतादीनामधिकारः[4]— सकलनिगमवल्लीसत्फलश्रीकृष्णनामवत्। यथोक्तं

---

[1] शिवपुराण edited by Pañcānana Tarkaratna reads—संक्षिप्य स पुनर्वे...र्धा कृतवान् मुनिः।....या लोके.. श्रुतः।....द्यापि देवलोके तच्छत.. ॥

[2] If the Vedas are eternal, they cannot be composed by anybody. But the appellations स्कान्द, आग्नेय etc., may give rise to the doubts that those were composed by स्कन्द, अग्नि etc. To this the Vaiṣṇavas would hold that these titles of the works were prevalent due to the teaching (प्रवचन-निबन्धन) of the teachers. Or, it may be that these titles came to be known as such due to the re-arrangement (आनुपूर्वीनिर्माण-निबन्धन) of them by स्कन्द, अग्नि etc.

[3] Thus it follows that the Purāṇas are eternal. Vyāsa did not compose them but only manifested. The other teachers as स्कन्द, अग्नि etc. also were not authors but they were the prominent teachers and taught these works perhaps at a time when these were going to be obsolete (तिरोभाव).

[4] The Vaiṣṇavas are faced with a problem—If the Purāṇas are included in the Vedas the Sūtas lose the right

प्रभासखण्डे—"मधुर-मधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर नरमात्रं तारयेत् कृष्णनाम ।।" इति ।

यथा चोक्तं विष्णुधर्मे—

"ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।"इति ।

अथ वेदार्थनिर्णायकत्वञ्च वैष्णवे—

"भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ।।" इत्यादौ ।

किञ्च, वेदार्थदीपकानां शास्त्राणां मध्यपातिता[1]भ्युपगमेऽप्याविर्भावकवैशिष्ट्यात्तयोरेव वैशिष्ट्यम् । यथा पाद्मे—

---

to read these Purāṇas. But in the Purāṇas it is found that the Sūta not only reads but teaches also. This has been justified by the Vaiṣṇavas in the following way :—

That the Purāṇas may be read by the Śūdras is established by the authority of the BH, where it is said that the women, the Śūdras and the Caṇḍālas cannot listen to the Vedas (*i.e.*, the four Vedas) ; but although unable to take part in the Vedic rituals they have not been totally forsaken since the sage Vyāsa has been kind enough to manifest the Mahābhārata for their benefit. (*cf.* BH. 1.4.25.) Further, the Sūta's right to instruct in the Purāṇas etc. has been recognised by the sages themselves. In BH Śaunaka asks the Sūta to explain everything except the *Chandas* (i. e. the four Vedas) because the Sūta has mastered all these Śāstras (cf. तत् सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन । मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ।।— BH 1.4.13)

[1] All the editions read here मध्यपातिता etc., which is meaningless. It is definitely a scribal mistake for स्मृतिता etc. It is strange that the same mistake has been reproduced in all the editions. The correctness of the reading स्मृतिता etc. will be substantiated by a study of the commentary of BD.

"द्वैपायनेन यद्‌बुद्धं ब्रह्माद्यैस्तन्न बुध्यते ।
सर्वंबुद्धं स वै वेद तद्‌बुद्धं नान्यगोचरः ॥" १५॥

श्रीबलदेवविद्याभूषणकृता टीका ।

व्यस्तेति । व्यस्ता विभक्ता वेदा येन ततया वेदव्यासः स्मृतः । स्कान्दमित्यादि । स्कन्देन प्रोक्तं न नु कृतमिति वक्तृहेतुका स्कान्दादिसंज्ञा । कठेनाधीतं काठकमित्यादिसंज्ञावत् । कठानां वेदः काठकः, "गोत्रचरणाद्वुञ्" (पा० सू० ४।३।१२६ ), "चरणाद्धर्माम्नाययोरिति[1] वक्तव्यम्" ( वा० ४।३।१२६) इति सूत्रवार्तिकाभ्याम् । ततश्च 'कठेनाधीतम्' इति सुष्ठूक्तम् । अन्यथा जन्यत्वेनानित्यतापत्तिः । आनुपूर्वी क्रमः, ब्राह्ममित्यादिक्रमनिर्माणहेतुका वा सा सा संज्ञेत्यर्थः । ब्राह्मयादिक्रमेण पुराणभागो बोध्यः । तथापि सूतादीनामिति । इतिहासादेर्वेदत्वेऽपि तत्र शूद्राद्यधिकारः 'स्त्रीशूद्रद्विजबन्धूनाम्' इत्यादिवाक्यबलाद् बोध्यः[2] । यथा रथकारस्याग्न्याधानाङ्गं[3] मन्त्रे तद्वाक्यबलादिति बोध्यम् । भारतव्यपदेशेनेति । दुरूहभागस्य व्याख्यानात्, छिन्नभागार्थपूरणाच्च पुराणे वेदाः प्रतिष्ठिताः[4] नैश्चल्येन स्थिता इत्यर्थः । किञ्चेति । वेदार्थदीपकानां मानवीयादीनां मध्ये यद्यपीतिहासपुराणयोः स्मृतित्वेनाभ्युपगमस्तथापि व्यासस्येश्वरस्य तदाविर्भावकत्वात्तदुत्कर्षं इत्यर्थः । तत्र प्रमाणं द्वैपायनेनेत्यादि ॥१५॥

---

[1] Kāśikā reads चरणाद्धर्माम्नाययोरिष्यते.

[2] B reads बोध्यम् which is absurd since it is to be construed with अधिकारः. This is most probably a printing mistake caused by a slip of the next sentence which concludes with बोध्यम्.

[3] There is the injunction of the Veda as तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः (तैः सं ७।१।१६) ; but again the Veda prescribes the ignition of the sacred fire by a रथकार, a hybrid *śūdra* caste. ( वर्षासु रथकार आदधीत ). In order to reconcile these two injunctions the Mīmāṃsaka concludes that a रथकार is entitled to that amount of sacrificial work which is said explicitly to be the function of a रथकार. For details see *Mīmāṃsāsūtra* 6.1.44-50.

[4] B drops the concluding portion from नैश्चल्येन स्थिता etc.

स्कान्दे—

"व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्युरीकृत्य[1] गृहादिव[2] ॥" इति ।

तथैव दृष्टं श्रीविष्णुपुराणे पराशरवाक्यम्—

"ततो[3]ऽत्र मत्सुतो व्यास[4] अष्टाविंशतिमेऽन्तरे ।
वेदमेकं चतुष्पादं चतुर्धा व्यभजत् प्रभुः ॥२॥
यथाऽत्र तेन वै व्यस्ता वेदव्यासेन धीमता ।
वेदस्तथा समस्तैस्तैर्व्यासै[5]रन्यैस्तथा मया ॥३॥
तदनेनैव व्यासानां शाखाभेदान् द्विजोत्तम ।
चतुर्युगेषु रचितान् समस्तेष्ववधारय ॥४॥

---

[1] Although the forms ऊरीकृत्य and उररीकृत्य are more prevalent, other forms as उरी-, ऊररी-, उरुरी-, ऊरुरी- also are accepted. In Gaṇapāṭha under ऊर्यादिच्विडाचश्च (Pāṇini Sū. 1.4.61) only उररी- is added to ऊरी-, already existing in the *sūtra*. Kṣīrasvāmin adds the third as ऊररी- under Amarakoṣa 3.109. Monier Williams in his monumental dictionary admits उरी- and उररी-. In Apte's dictionary one more word as ऊररी- is accepted.

[2] v.l. गृहादिवत्. RG prefers गृहादिवत् but the reading गृहादिव seems to be more appropriate.

[3] "ततो दुर्मेधस्त्वा( ? स्त्वा )दिना सकलवेदाध्ययनाद्यसामर्थ्यात्"—RG.

[4] It should be व्यासोऽष्टा...... This would bring down the number of syllables in this hemistich to 15, *i.e.* one less than the number required. For this somebody might have disjoined the sandhi. Viṣṇupurāṇa, as edited by Jīvānanda, varies immensely from this quotation. The variations are—.... व्यासोऽष्टा......यथा तु .....स्तैर्व्यस्ता व्यासैस्तथा......नैव वेदानां...... गेष्वाचरितान्......

[5] "व्यासैरिति शिष्याभिप्रायेण बहुवचनम्"—RG.

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
कोऽन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥५॥"
(वि० पु० ३।४।२-५) इति ।

स्कान्द एव—

"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।

उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥" इति ।
[1]वेदशब्देनात्र पुराणादिद्वयमपि गृह्यते । तदेवमितिहासपुराणविचार एव श्रेयानिति सिद्धम्[2] । तत्रापि पुराणस्यैव गरिमा दृश्यते । उक्तं हि नारदीये—

---

[1] It refers to the word वेद occuring in the previous quotation "उत्सन्नान् भगवान् वेदान् etc."

[2] Now this being settled that the *Itihāsas* and the *Purāṇas* are eternal and that they have the capacity to ascertain the real import of the Vedas, people of this age ( कलियुग ) should rather devote their limited energy to the full in deliberating the *Itihāsa* and the *Purāṇa*.

The word एव, as it stands now, lays stress upon the essentiality of reading the *Itihāsa* and the *Purāṇa* and negatives the efficacy of the other eternal ( अपौरुषेय ) literature. This dictum is definitely contradictory to the belief of the followers of the Vedas. So RG suggests that 'एव' should be read after 'श्रेयान्', which will mean that the three castes should not give up the deliberations upon the Vedas. This latter view preserves the tradition of reading the Vedas and the performance of the sacrificial acts. "यद्वा इतिहासपुराणविचारः श्रेयानेवेति

"वेदार्थादधिकं[1] मन्ये पुराणार्थं वरानने ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥
पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् ।
सुदान्तोऽपि सुशान्तोऽपि न गतिं क्वचिदाप्नुयात् ॥"

इति ॥ १६ ॥

श्रीबलदेवविद्याभूषणकृता टीका ।

व्यासेति । बादरायणस्य ज्ञानं महाकाशम्, अन्येषां ज्ञानानि तु तदंशभूतानि खण्डाकाशानीति तस्येश्वरत्वात् सार्वज्ञ्य[2]मुक्तम् । 'ततोऽत्र मत्सुतः' इत्यादौ च व्यासान्तरेभ्यः पाराशर्यस्येश्वरत्वान्महोत्कर्षः । 'नारायणात्' इत्यादौ चेश्वरत्वं प्रस्फुटमुक्तम् । गौतमस्य शापात् इति । वरोत्पन्ननित्यधान्यराशिर्गौतमो महति दुर्भिक्षे विप्रानभोजयत् । अथ सुभिक्षे गन्तुकामांस्तान् हठेन न्यवासयत् । ते च मायानिर्मितया गोर्गौतमस्पर्शेन मृताया हत्यामुक्त्वा गताः । ततः कृतप्रायश्चित्तोऽपि गौतमस्तन्मायां विज्ञाय शशाप, ततस्तेषां ज्ञानलोप इति वाराहे कथास्ति । अधिकमिति । निःसन्देहत्वादिति बोध्यम् । अन्यथा कृत्वा अवज्ञाय ॥१६॥

स्कान्दप्रभासखण्डे[3]——

"वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥

---

योजना । तेन द्विजानां वेदविचारोऽत्यावश्यकः, 'तदेवं (? तमेतं) वेदानुवचनेन ब्राह्मणा विविदिषन्ति' (बृ० उ० ४।४।२२) इति श्रुतेः, 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति श्रुतेः (? स्मृतेः) ।"—RG.

[1] The superiority of the Purāṇa is not in subject-matter but in clarity only ; otherwise the import of both the Vedas and the Purāṇas being the same there cannot be any inequality in their status. This is admitted by both the commentators—BD and RG. *Cf.* "अधिकमिति । निःसन्देहत्वादिति बोध्यम "—BD. "वेदार्थादिति । वेदार्थावधारणादित्यर्थः । यथाश्रुते वेदार्थपुराणार्थयोरेकत्वात् न्यूनाधिकभावानुपपत्तेः ।"—RG.

[2] A,B,C,D read सार्वज्ञम् ; but we prefer the reading in E.

[3] *Skandapurāṇa* reads——....पुराणं वै....(P. 27) वेदेन न दृष्टं . ...यन्न दृष्टं च तत् पुराणेषु गीयते .....

विभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति ।
इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥
यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिषु द्विजाः ।
उभयोर्यन्न दृष्टं हि तत् पुराणैः प्रगीयते ॥
यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः ।
पुराणं नैव जानाति न च स स्याद्विचक्षणः[1] ॥"

(२।६०–६३) इति ।

अथ पुराणानामेवं प्रामाण्ये स्थितेऽपि तेषामपि सामस्त्येनाप्रचररूपत्वात् नानादेवताप्रतिपादकप्राय[2]त्वादर्वाचीनैः क्षुद्रबुद्धिभिरर्थो दुरधिगम इति तदवस्थ एव संशयः ।

यदुक्तं मात्स्ये[3]

"पञ्चाङ्गञ्च पुराणं स्यादाख्यानमितरत्[4] स्मृतम् ।
सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ॥
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ।
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ॥
सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते ॥" इति ।

---

[1] "न च स स्याद्विचक्षण इति । इतिहासादपि पुराणस्याधिक्यं दर्शयति, सम्यगर्थावधारणरूपत्वादिति ।"—RG.

[2] प्राय means chief, main.

[3] *Matsyapurāṇa* ( 190. 13–14 ) reads—सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकास्तथा । रजस्तमोमयास्तद्वदेते त्रिंशदुदाहृताः ॥ सङ्कीर्णेषु सरस्वत्याः पितृणां व्युष्टिरुच्यते । अग्नेः शिवस्य माहात्म्यं तामसेषु दिवाकरे । राजसेषु च माहात्म्यमधिकं ब्रह्मणः स्मृतम् ॥ The *ślokas* of TS diverge so widely from these *ślokas* of *Matsyapurāṇa* that it is very difficult to ascertain whether Śrījīva quoted these ślokas.

[4] "इतरत् पुराणभिन्नम् । आख्यानमाख्यानाख्यं शास्त्रम् । यद्वा, इतरत् विश्वसर्गादिपञ्चलक्षणातिरिक्तमपि प्रसङ्गादाख्यानमाख्यायकमिति पुराणविशेषणम् ।"—RG.

अत्राग्नेस्तत्तदग्नौ प्रतिपाद्यस्य तत्तद्यज्ञस्येत्यर्थः। शिवस्य चेति चकाराच्छिवायाश्च। सङ्कीर्णेषु सत्त्वरजस्तमोमयेषु कल्पेषु बहुषु। सरस्वत्याः नानावाण्यात्मकतदुपलक्षिताया नानादेवताया इत्यर्थः। पितृणां "कर्मणा पितृलोकः" ( बृ० उ० १।५।१६ ) इति। श्रुतेस्तत्प्रापककर्मणामित्यर्थः ॥१७॥

श्रीबलदेवविद्याभूषणकृता टीका।

वेदवदिति। पुराणार्थो वेदवत् सर्वसम्मत इत्यर्थः। ननु पण्डितैः कृताद्वेदभाष्यात्तदर्थो ग्राह्य इति चेत्तत्राह बिभेतीति। अकृते भाष्ये सिद्धे किं तेन कृत्रिमेणेति भावः। अथेति। असन्दिग्धार्थतया पुराणानामेव प्रामाण्ये प्रमाकरणत्व इत्यर्थः। अर्वाचीनैः क्षुद्रबुद्धिभिरिति। यस्य विभूतयोऽपीदृश्यः स हरिरेव सर्वश्रेष्ठ इति तदैकार्थ्यम् वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥ ( हरिवंश, १३२।९५ )[1] इति हरिवंशोक्तमजानद्भिरित्यर्थः ॥१७॥

तदेवं सति तत्तत्कल्पकथामयत्वेनैव मात्स्य एव प्रसिद्धानां तत्तत्पुराणानां[2] व्यवस्था ज्ञापिता; तारतम्यन्तु कथं स्यात् येनेतरनिर्णयः क्रियेत ? सत्त्वादितारतम्येनैवेति चेत्, "सत्त्वात् सञ्जायते ज्ञानम्" ( गीता १४।१७ ) इति "सत्त्वं यद्ब्रह्मदर्शनम्" इति च न्यायात् सात्त्विकमेव पुराणादिकं परमार्थज्ञानाय[3] प्रबलमित्यायातम्। तथापि परमार्थेऽपि नानाभङ्ग्या विप्रतिपद्यमानानां समाधानाय किं स्यात् ? यदि[4] सर्वस्यापि वेदस्य पुराणस्य चार्थनिर्णयाय तेनैव श्रीभगवता व्यासेन ब्रह्मसूत्रं कृतं तदवलोकनेनैव सर्वोऽर्थो निर्णेय इत्युच्यते, तर्हि नान्यसूत्रकारमुन्यनुगतैर्मन्येत। किञ्चात्यन्तगूढार्थानामल्पाक्षराणां तत्सूत्राणामन्यार्थत्वं कश्चिदा-

---

[1] In P. Tarkaratna's edition the reading is—वेदे रामायणे पुण्ये भारते भरतर्षभ। आदौ चान्ते च मध्ये च हरिः सर्वत्र गीयते ॥

[2] v.l. पुराणानामपि

[3] v.l. परमार्थज्ञापनाय

[4] v.l. यदि च

चक्षीत, ततः कतरदिदमत्र समाधानम् ? तदेव[1] समाधेयम्—यद्येकतममेव पुराणलक्षणमपौरुषेयं शास्त्रं[2] सर्ववेदेतिहासपुराणानामर्थसारं ब्रह्मसूत्रोपजीव्यञ्च भवद् भुवि सम्पूर्णं प्रचरद्रूपं स्यात् । सत्यमुक्तम्, यत एव च सर्वप्रमाणानां चक्रवर्तिभूतमस्मदभिमतं श्रीमद्भागवतमेवोद्भावितं भवता ॥१८॥

श्रीबलदेवविद्याभूषणकृता टीका ।

तदेवमिति । मात्स्य एवेति । पुराणसंख्यातद्दानफलकथनाङ्कितेऽध्याय इति बोध्यम् । तारतम्यमिति । अपकर्षोत्कर्षरूपं येनेतरस्मादुत्कृष्टस्य पुराणस्य निर्णयः स्यादित्यर्थः । सात्त्विकपुराणमेवोत्कृष्टमिति भावेन स्वयमाह—सत्त्वादिति । पृच्छति—तथापीति, परमार्थनिर्णयाय सात्त्विकशास्त्राङ्गीकारेऽपीत्यर्थः । नानाभङ्गयेति । सगुणं निर्गुणं ज्ञानगुणकं जडमित्यादिकं कुटिलयुक्तिकदम्बैर्निरूपयतामित्यर्थः । नानासूत्रकारेति । गौतमाद्यनुसारिभिरित्यर्थः । ननु ब्रह्मसूत्रशास्त्रे स्थिते काऽपेक्षा तदन्यसूत्राणामिति चेत्तत्राह—निञ्चात्यन्तेति । पृष्टः प्राह—तदेवेति । ब्रह्मसूत्रोपजीव्यमिति । येन ब्रह्मसूत्रं स्थिरार्थं स्यादित्यर्थः । पृष्टस्य हृद्गतं स्फुटयति सत्यमुक्तमित्यादिना ॥१८॥

यत् खलु पुराणजातमाविर्भाव्य, ब्रह्मसूत्रञ्च प्रणीयाप्यपरितुष्टेन तेन भगवता निजसूत्राणामकृत्रिमभाष्यभूतं[3] समाधिलब्धमाविर्भावितं यस्मिन्नेव सर्वशास्त्रसमन्वयो दृश्यते । सर्ववेदार्थलक्षणां गायत्रीमधिकृत्य प्रवर्तितत्वात् । तथाहि तत्स्वरूपं मात्स्ये—

---

1 तदेवं—B,C. BD accepts the reading तदेव.

2 शास्त्रं – dropped in B,C.

3 How can it be that the eternal scripture Śrimadbhāgavata is the *bhāṣya* of Brahmasūtra, composed by Vyāsa ? To this RG holds that BH is not the *bhāṣya* but it serves the purpose of a *bhāṣya*. That is why Śrijiva uses the word भूत, meaning similar. "ब्रह्मसूत्रस्य वेदव्यासकृतत्वेनापौरुषेयश्रीमद्भागवतस्य तद्व्याख्यानरूपत्वासम्भवात् सदृशार्थकभूतनिर्देशः ।"—RG.

"यत्राधिकृत्य गायत्रीं[1] वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥२०॥[2]...
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमां गतिम् ।
अष्टादशसहस्राणि पुराणं तत् प्रकीर्तितम्[3] ॥" २२॥
( ५३।२०-२२) इति ।

अत्र गायत्रीशब्देन तत्सूचकतदव्यभिचारि-'धीमहि'पदसम्वलित-तदर्थ एवेष्यते ।[4] सर्वेषां मन्त्राणामादिरूपायास्तस्याः साक्षात्-कथनानर्हत्वात् ।[5] तदर्थता च, "जन्माद्यस्य यतः" ( भागवत

---

[1] Here गायत्री means 'the significance of गायत्री', and not the गायत्रीमन्त्र.

[2] Note that *śl*. 21 has not been quoted here.

[3] *Matsyapurāṇa* reads—....भागवतमुच्यते ॥....पौर्णमास्यां प्रोष्ठपद्यां....In TS the words पौर्णमास्याम् and प्रोष्ठपद्याम् have changed their places perhaps under the influence of the following śloka of BH—प्रोष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् । ददाति यो भागवतं स याति परमां गतिम् ।. (१२।१३।१३).

[4] 'धीमहि' is the key-word of गायत्रीमन्त्र and it means 'we meditate'. In the Bhāgavata the sense of the गायत्री has been made explicit at the very beginning. Not only that, the word 'धीमहि' occurs unchanged in BH. 1.1.1.

[5] The गायत्रीमन्त्र might have been quoted here in order to show that the import of this work is non-different from that of the गायत्रीमन्त्र. But that could not be done inasmuch as this work viz. Bhāgavata was meant for the women and Śūdras also. ("साक्षात्कथनानर्हत्वादिति स्त्रीशूद्राद्यधिकारश्रवण-योग्यग्रन्थादौ गायत्रीस्वरूपलिखनस्यायोग्यत्वादित्यर्थः ।"—RG) There may be another reason for not quoting the गायत्रीमन्त्र. Mere quotation of a difficult and meaning *mantra* will not serve the purpose as it may be misinterpreted by ordinary

१।१।१) "तेने ब्रह्म हृदा" ( भागवत १।१।१) इति सर्वलोकाश्रयत्व-बुद्धिवृत्तिप्रेरकत्वादिसाम्यात् । धर्मविस्तर इत्यत्र धर्मशब्दः परमधर्मपरः, "धर्मः प्रोज्झितकैतवोऽत्र परमः" (भागवत १।१।२) इत्यत्रैव प्रतिपादितत्वात् । स च भगवद्ध्यानादिलक्षण एवेति पुरस्ताद्वचक्तीभविष्यति ।।१९।।

श्रीबलदेवविद्याभूषणकृता टीका ।

श्रीभागवतं स्तौति—यत् खल्वित्यादि । अपरितुष्टेनेति । पुराणजाते ब्रह्मसूत्रे च भगवत्पारमैश्वर्यमाधुर्ययोः सन्दिग्धतया गूढतया चोक्तेस्तत्र तत्र चापरितोषः, श्रीभागवते तु तयोस्तद्विलक्षणतयोक्तेस्तत्र परितोष इति बोध्यम् । तदर्थता गायत्र्यर्थता । स च भगवद्ध्यानादिलक्षण इति । विशुद्धभक्तिमार्गबोधक इत्यर्थः ।।१९।।

[1]एवं स्कान्दे प्रभासखण्डे च "यत्राधिकृत्य गायत्रीम्" इत्यादि ।[2]

"सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
सद्वृत्तान्तोद्भवं लोके तच्च भागवतं स्मृतम् ।।

लिखित्वा तच्च" इत्यादि । "अष्टादशसहस्राणि पुराणं तत् प्रकीर्तितम् ।"—इति पुराणान्तरञ्च[3] ।

"ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ।।
गायत्र्या च समारम्भस्तद्वै भागवतं विदुः ।।" इति ।

अत्र "हयग्रीवब्रह्मविद्या" इति वृत्रवधसाहचर्येण नारायणवर्म-

---

people. So the first śloka of BH expresses the import of गायत्रीमन्त्र. ( "गायत्र्याऽन्यार्थपरताभ्रमनिराशायापि तदर्थत्र काशनपद्यारम्भ इति ।"—RG)

[1] B and C drop the portion एवं स्कान्दे....इति पुराणान्तरञ्च.

[2] Here the word इत्यादि means "after the śloka beginning as यत्राधिकृत्य गायत्रीम् etc." cf. "गायत्रीमित्यादीति—इत्याद्यनन्तरमित्यर्थः"—RG.

[3] v. l. इत्यग्निपुराणे च. The entire discussion in this paragraph and also in the previous one, especially the quotation from the *Purāṇas*, owes much to Śridhara's commentary on BH. 1.1.1.

वोच्यते । हयग्रीवशब्देनात्राश्वशिरा दधीचिरेवोच्यते[1] । तेनैव च प्रवर्तिता नारायणवर्माख्या ब्रह्मविद्या । तस्याश्वशिरस्त्वञ्च षष्ठे—"यद्वा अश्वशिरो नाम" ( भा० ६।९।५२ ) इत्यत्र प्रसिद्धं नारायणवर्मणो ब्रह्मविद्यात्वञ्च—

"एतच्छ्रुत्वा तथोवाच[2] दध्यङ्ङाथर्वणस्तयोः ।
प्रवर्ग्यं ब्रह्मविद्याञ्च सत्कृतोऽसत्यशङ्कितः ॥"

इति टीको[3]त्थापितवचनेन चेति । श्रीमद्भागवतस्य भगवत्-प्रियत्वेन भागवताभीष्टत्वेन च परमसात्त्विकत्वम् । यथा पाद्मे अम्बरीषं प्रति गौतमप्रश्नः—

"पुराणं त्वं भागवतं पठसे पुरतो हरेः ।
चरितं दैत्यराजस्य प्रह्लादस्य च भूपते ॥"

तत्रैव वञ्जुलीमाहात्म्ये तस्य तस्मिन्नुपदेशः—

"रात्रौ तु जागरः कार्यः श्रोतव्या वैष्णवी कथा ।
गीतानामसहस्रञ्च पुराणं शुकभाषितम् ।
पठितव्यं प्रयत्नेन हरेः सन्तोषकारणम् ॥"

---

[1] Dadhyaṅ instructed in the Brahmavidyā with the horse-head grafted on his neck by the Aśvins. Indra came to know of it and severed the head with which the Brahmavidyā was taught. The Aśvins, who were expert surgeons and had earlier preserved the original head of Dadhyaṅ, restored it in its proper place. Śaṅkarācārya in the bhāṣya of Bṛ. U. 2.5.16 narrated this story. Śrīdhara in his commentary of BH recounted it in verse perhaps by quoting from some reputable source. (एवं ह्यत्र प्रसिद्धा कथा ). Bṛhaddevatā refers to this in iii.18-23. The earliest reference may be the mantra of the Ṛgveda—आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥ (१।११७।२२)

[2] P. Tarkaratna's edition reads तथावोचत्.

[3] Commentary of Śrīdharasvāmin.

तत्रैवान्यत्र —

"अम्बरीष शुकप्रोक्तं[1] नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ॥"

स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये—

"श्रीमद्भागवतं भक्त्या पठते हरिसन्निधौ ।
जागरे तत्पदं याति कुलवृन्दसमन्वितः ॥" २० ॥

### श्रीबलदेवविद्याभूषणकृता टीका

'ग्रन्थ' इत्यादौ हयग्रीवादिशब्दयोर्भ्रान्तिं निराकुर्वन् व्याचष्टे—अत्र हयग्रीवेत्यादिना । एतच्छ्रुत्वेति । दध्यङ् दधीचिः । प्रवर्ग्यमिति प्राणविद्याम् । ननु पाद्मादीनि सात्त्विकानि पञ्च सन्ति, तैरस्तु विचार इति चेत्तत्राह—श्रीमदिति । एतस्य परमसात्त्विकत्वे पाद्मादिवचनान्युदाहरति पुराणं त्वमित्यादिना । कुलवृन्देति—तत्कर्तृकश्रवणमहिम्ना तत्कुलस्य च हरिपदलाभ इत्यर्थः ॥२०॥

---

1 In BH the teachings of Śuka start from the beginning of the second Skandha and Śuka takes leave of Parīkṣit in 12.6.8 (इत्युक्तस्तमनुज्ञाप्य भगवान् बादरायणिः । जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥). Should the first Skandha and the portion following 12.6.8 be deemed not belonging to BH ? To this it is urged that the import of the entire BH is in perfect unison with the *Gāyatrī mantra.* The first śloka of BH, especially the portion तेने ब्रह्म हृदा, comprehends the meaning of *Gāyatrī* and the śloka ending as सत्यं परं धीमहि (12.13.19) is immensely similar to the *Gāyatrī* mantra. Thus the whole treatise between these two extremes must be known as BH. (cf. हृदा मनसैव तेने विस्तृतवान् । अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गायत्र्यर्थोऽपि दर्शितः ।....गायत्र्या प्रारम्भेण गायत्र्याख्यब्रह्मविद्यारूपमेतत् पुराणमिति दर्शितम्—SR under 1..1.1 Again तत् परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहि । इति गायत्र्यैव यथोपक्रममुपसंहरन्

गारुडे च—

"पूर्णः सोऽयमतिशयः ।
अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः[1] ॥
गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ।
पुराणानां सामरूपः साक्षाद्भगवतोदितः ॥
द्वादशस्कन्धयुक्तोऽयं शतविच्छेदसंयुतः ।
ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥" इति ।

---

गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति--SR under 12.13.19). Tradition holds that two more ślokas should be included in BH i.e. BH ends with विष्णुरातममूमुचत् (12.13.21).

1 There is a Śloka in Skandapurāṇa (Prabhāsa, 2.94) "अष्टादश पुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥" which testifies to prior manifestation of the purāṇas including the Bhāgavata. So how can BH be the exposition of the Mahābhārata ? This problem is grappled with (i) by holding that by the later manifestation of the purāṇas the Mahābhārata, which was already incorporated ( उपबृंहित ) with the import of the Vedas, was made complete ( अखिल ) or (ii) by interpreting that the entire ( अखिल ) Mahābhārata was made complete ( उपबृंहित ) by the incorporation of the purāṇas. It is doubtless that the Mahābhārata is earlier than the purāṇas. cf. भारतानन्तरमेव पुराणसंग्रहः कृत इति । अष्टादश पुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥ इति वचनस्यार्थः—सत्यवतीसुतोऽष्टादशपुराणं कृत्वा भारताख्यानमखिलं पूर्णं चक्रे, खिलशब्दस्योनार्थत्वात् । तदुपबृंहितं वेदार्थैर्युक्तम् । यद्वा, अखिलं तदेव लोकादिगतमपि भारताख्यानं तदुपबृंहितं तैः पुराणैरुपबृंहितं पूर्णं चक्रे इत्यन्वयः, न त्वष्टादश पुराणानि कृत्वा भारतं चक्रे इत्यन्वयः । श्रुत्यादिविरोधापत्तेः । अतएव वक्ष्यमाणगरुडपुराणभागवतलक्षणे (in this paragraph i.e. para 21) अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णय इत्युक्तम्——RG under TS para 13.

ब्रह्मसूत्राणामर्थस्तेषामकृत्रिमभाष्यभूत इत्यर्थः । पूर्वं सूक्ष्मत्वेन मनस्याविर्भूतं तदेव संक्षिप्य सूत्रत्वेन पुनः प्रकटितम्, पश्चाद्विस्तीर्णत्वेन साक्षाच्छ्रीभागवतमिति ।[1] तस्मात्तद्भाष्यभूते स्वतःसिद्धे तस्मिन् सत्यर्वाचीनमन्यदन्येषां स्वस्वकपोलकल्पितं तदनुगतमेवादरणीयमिति गम्यते । भारतार्थविनिर्णयः[2] ।

निर्णयः सर्वशास्त्राणां भारतं परिकीर्तितम् ॥
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ॥

---

This later and bigger Mahābhārata was circulated among Janamejaya and others. cf. पूर्वं कृतमपि भारतं तत् पश्चाज्जनमेजयादिषु प्रचारितमित्यपेक्ष्यैव संगम्.——SS under TS para. 21.

1 The import of all the Vedas has been epitomized in the *Gāyatrī mantra* and this mantra being a portion of the Veda is capable of being read by the males of the three castes. Hence a verse of a closely similar import was revealed to Vyāsa. This was developed into a bigger treatise which again took the shape of the present edition of the BH by the addition of the reasons and illustrations. cf. सकलवेदतात्पर्यविषयपरमार्थसंग्राहकत्वेन गूढतया स्थितत्वेन च यत् पद्यं मनस्याविर्भूतं गायत्रीसमानार्थकं तदेवेत्यर्थः । सूत्रत्वेन—उपक्रमरूपत्वेन । विस्तीर्णत्वेन सदृष्टान्तयुक्त्युपन्यासेतिहासादिना गायत्र्यर्थतात्पर्यविस्तारकत्वेन ।--RG.

2 The expressions of the above-quoted Garuḍa purāṇa are being taken up for explanation seriatim. The portion "अर्थोऽयं ब्रह्मसूत्राणाम्" has been explained. Now "भारतार्थविनिर्णयः" is taken up. The discussion on justifiability of this clause goes up to the end of this paragraph and it continues in the next one. Evidently the division of paragraphs has here been arbitrary. The entire paragraph No. 22 is in fact an exposition of the said quotation of Garuḍapurāṇa. For similar irregular parag aphing see para 30-33.

व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत[1] भारतम् ।
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते[2] ॥"

इत्याद्युक्तलक्षणस्य भारतस्यार्थविनिर्णयो यत्र सः। श्रीभगवत्येव तात्पर्यं तस्यापि । तदुक्तं मोक्षधर्मे नारायणीये श्रीवेदव्यासं प्रति जनमेजयेन —

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
आरण्यं सर्ववेदेभ्य ओषधीभ्योऽमृतं यथा ॥
समुद्धृतमिदं ब्रह्मन् कथामृतमिदं तथा ।
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम् ॥"

इति ॥२१॥

श्रीबलदेवविद्याभूषणकृता टीका ।

गारुडवचनैश्च परमसात्त्विकत्वं व्यञ्जयन् ब्रह्मसूत्रार्थनिर्णायकत्वं गुणमाह—अर्थोऽयमिति । गारुडवाक्यपदानि व्याचष्टे—ब्रह्मसूत्राणामित्यादिना । तस्मात्तद्भाष्येत्यादि—अन्यद्वैष्णवाचार्यरचितमाधुनिकं भाष्यं तदनुगतं श्रीभागवताविरुद्धमेवादर्तव्यं, तद्विरुद्धं शङ्करभट्टभास्करादिरचितं तु हेयमित्यर्थः। भारतार्थेति पदं व्याकुर्वन् भारतवाक्येनैव भारतस्वरूपं दर्शयति—निर्णयः सर्वेति । भारतं किंतात्पर्यकमित्याह—श्रीभगवत्येवेति । तस्य भारतस्यापीत्यर्थः । भारतस्य भगवत्तात्पर्यकत्वे नारायणीयवाक्यमुदाहरति—इदं शतेत्यादि ॥ २१ ॥

---

1 Some editions read त्वतिरिच्यत. RG accepts the reading त्वत्यरिच्यत.

2 This line is found in Mahābhārata, Ādiparvan, 1.274. But the implication of the previous lines is to be met with as पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् । चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ॥ तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते । (*ibid.* 1.272-3)

तथा च तृतीये—

"मुनिर्विवक्षुर्भगवद्गुणानां[1] सखापि ते भारतमाह कृष्ण:[2] ।
यस्मिन्नृणां ग्राम्यकथा[3]नुवादैर्मतिगृहीता नु हरेः कथायाम् ॥"
(भा: ३।५। १२) इति ॥[4]

---

1 Here षष्ठी is debarred by the rule "न लोकाव्ययनिष्टाखलर्थतृनाम्" (Pāṇini 2.3.69). Śrīdhara notices this irregularity and glosses as—"भगवद्गुणान् मोक्षधर्मान्ते नारायणीयोपाख्यानेन वक्तुमिच्छुः सन्".

2 कृष्ण means कृष्णद्वैपायनव्यास.

3 Most of the editions read ग्राम्यसुखा etc. BD explains as कथा etc. but RG and SR gloss as सुखा etc. The implication of the two is the same. Ordinary people are not eager to listen to the holy discourses regarding Hari but they are to be drawn to these useful discussions by the introduction of the topics of their choice or by the topics which cause crude and vulgar pleasures. Ultimately the Mahābhārata denounces these and teaches the nature of Bhagavān. Whereas the BH comprises only the topics concerning the nature of God, the Mahābhārata possesses many stories and illustrations which culminate in the ascertainment of the nature of God. Hence BH is a superior treatise in respect of the nature of God. Further, the name Bhāgavata speaks for the exclusiveness of the topic ; the derivative meaning of Bhāgavata establishes its special purpose of expounding the nature of God or Bhagavat. cf. "ग्राम्यसुखानुवादस्तु प्रथमतः कामिनामपि प्रवृत्त्यर्थं ततश्च तत्रैव ग्राम्यसुखनिन्दया भगवत्तत्त्वमावेदितं श्रेयसे। एवञ्च भारततात्पर्यविषयस्य भगवत एव सामस्त्येन वर्णनमयभागवतस्य भारतादुत्तमत्वं दर्शितम्। एवं भगवत इदं भागवतमिति व्युत्पत्तिसिद्धनामापि तदुत्कर्षं दर्शयति।"—RG.

4 A casual reading of para. 22 shows that there is repetition of many ideas in two similar interpreta-

तस्माद्[1] गायत्रीभाष्यरूपोऽसौ। तथैव हि विष्णुधर्मोत्तरादौ तद्व्याख्याने भगवानेव विस्तरेण प्रतिपादितः। अत्र "जन्माद्यस्य" इत्यस्य व्याख्यानञ्च तथा दर्शयिष्यते। वेदार्थपरिबृंहितः। वेदार्थस्य परिबृंहणं यस्मात्। तच्चोक्तम्—"इतिहासपुराणाभ्याम्" इत्यादि। पुराणानां सामरूपः। वेदेषु सामवत् स तेषु श्रेष्ठ इत्यर्थः। अतएव स्कान्दे—

"शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः।
न यस्य तिष्ठते गेहे शास्त्रं भागवतं कलौ॥
कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ।
गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः॥
यत्र यत्र भवेद्विप्र शास्त्रं भागवतं कलौ।
तत्र तत्र हरिर्याति त्रिदशैः सह नारद॥
यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने।
अष्टादशपुराणानां फलं प्राप्नोति मानवः॥" इति।

---

tions. One should be deleted. The portion from तस्माद् गायत्रीभाष्यरूपोऽसौ to विचारणीयमिति स्थितम् (P. 39, line 3) is deleted in editions D & E. Again the subsequent portion is omitted in editions B & C. But A includes both the portions. The most celebrated commentator BD does not comment upon the second portion. RG glosses upon both. A close study of the entire paragraph will bring out that the second portion from हेमाद्रेर्व्रतखण्डे etc. is a supplement to the first portion. The language in which the second portion is couched seems to be the same as that of the first. May be that the author supplemented further observations sometime later. The author Śrījīva owns this portion in क्रमसन्दर्भ where he says—" एवमग्निपुराणे गायत्र्यर्थः श्रीभगवानेवाभिमतः, तद्वचनानि तत्त्वसन्दर्भे दृश्यानि".

1 A holds (in foot note) that तस्मात् is dropped in some editions.

शतविच्छेदसंयुतः। पञ्चत्रिंशदधिकशतत्रयाध्यायविशिष्ट इत्यर्थः[1]। स्पष्टार्थमन्यत्। तदेवं परमार्थंविवित्सुभिः श्रीभागवतमेव साम्प्रतं विचारणीयमिति स्थितम्।

हेमाद्रेर्व्रतखण्डे

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह।
इति भारतमाख्यानं कृपया मुनिना कृतम्॥"

(भाः १।४।२५)

इति वाक्यं श्रीभागवतीयत्वेनोत्थाप्य भारतस्य वेदार्थतुल्यत्वेन निर्णयः कृत इति। तन्मतानुसारेण त्वेवं व्याख्येयम्—भारतार्थस्य विनिर्णयः, वेदार्थतुल्यत्वेन विशिष्य निर्णयो यत्रेति। यस्मादेवं भगवत्परस्तस्मादेव "यत्राधिकृत्य गायत्रीम्" इति कृतलक्षण-श्रीमद्भागवतनामा ग्रन्थः श्रीभगवत्परायाः गायत्र्या भाष्य-रूपोऽसौ। तदुक्तं "यत्राधिकृत्य गायत्रीम्" इत्यादि।[2] तथैव ह्यग्निपुराणे तस्य व्याख्याने विस्तरेण प्रतिपादितः। तत्र तदीयव्याख्यादिग्दर्शनं यथा—

"तज्ज्योतिः परमं ब्रह्म भर्गस्तेजो यतः स्मृतः।"

---

1 It will be discussed in P. 44.

2 Gāyatri is the quintessence of the entire Veda. But women, śūdras, caṇḍālas etc. cannot read the Gāyatri. So they should worship Gāyatri through Purāṇa. There is a misunderstanding among some Vaiṣṇavas that even Vaiṣṇava Brāhmaṇa should abstain from uttering the Gāyatri as the said mantra smacks of Śakti-cult. But this view has been taken exception to by Śrijiva who makes a scholarly discussion of the expression गायत्रीभाष्यरूपः and shows that the Gāyatri propounds none other than Viṣṇu, who is also not different from Kṛṣṇa.

इत्यारभ्य पुनराह--

"तज्ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम् ।
शिवं केचित् पठन्ति स्म शक्तिरूपं वदन्ति च ॥
केचित् सूर्यं केचिदग्निं दैवतान्यग्निहोत्रिणः ।
अग्न्यादिरूपो विष्णुर्हि वेदादौ ब्रह्म गीयते ॥" इति ।

अत्र[1] "जन्माद्यस्य" इत्यस्य व्याख्यानञ्च तथा[2] दर्शयिष्यते । "कस्मै येन विभासितोऽयम्" (भाः १२।१३।१९) इत्युपसंहारवाक्ये च "तच्छुद्धम्" (भाः १२।१३।१९) इत्यादिसमानमेवाग्निपुराणे तद्व्याख्यानम् ।

---

1 v.l. तत्र —D. "अत्र गायत्रीव्याख्याने"—RG.

2 "तथा विष्णुपरतया"—RG. Śrījīva lays much stress upon his stand that the Gāyatrī propounds only Kṛṣṇa or Viṣṇu. The word 'bharga' of Gāyatrī is not the material splendour but it means consciousness ( चैतन्य ) i.e. the illuminator of all. It is only consciousness that illumines everything but not the glow of the sun which itself requires consciousness for its revelation to somebody. So consciousness and its receptacle being the same, one should worship आत्मन् or परमब्रह्म, the locus of consciousness along with *Praṇava* (ॐ), *Vyāhṛti* ( भूर्भुवः स्वः) and *Gāyatrī*. cf. " भर्गो भर्गशब्दः, यतस्तेजः—तेजोवाचकः स्मृतः। तेजः स्वपरप्रकाशकत्वाच्चैतन्यम् । चैतन्यतदाश्रययोरभेदाच्चेतन एव तत्पर्यायः। किं तच्चेतनमित्याकाङ्क्षायां तात्पर्यं निर्दिशति--परमं ब्रह्मेति । प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च । उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः॥ इति योगियाज्ञवल्क्यवचनमपि तथा बोधयति । पाद्मे च नारदं प्रति ब्रह्मवाक्यम्—कृष्णाख्यं तु परं ब्रह्म भुवि जातं न संशय इति ।..एवञ्च भर्गशब्देन कृष्ण एव निर्धारितः ।"—RG.

"नित्यं शुद्धं परं ब्रह्म नित्यभर्गमधीश्वरम् ।
अहं ज्योतिः परं ब्रह्म ध्यायेम हि विमुक्तये ॥" इति ।

अत्राहं[1] ब्रह्मेति "नादेवो देवमर्चयेत्" इति न्यायेन योग्यत्वाय स्वस्य तादृक्त्वभावना दर्शिता । ध्यायेमेति—अहं तावत् ध्यायेयं, सर्वे च वयं ध्यायेमेत्यर्थः । तदेतन्मते तु मन्त्रेऽपि भर्गशब्दोऽयमदन्त एव स्यात् । "सुपां सुलुक्" इत्यादिना छान्दससूत्रेण तु द्वितीयैकवचनस्याम: सु-भावो ज्ञेयः[2] ।

यत्तु द्वादशे (भा: १२।६।६७) "ॐ नमस्ते" इत्यादिगद्येषु[3]

---

1 v.l. तथाहं

2 "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" (Pāṇ.Sū. 7.1.39). By Vedic irregularity भर्ग अम् becomes भर्ग सु i.e. भर्गः.

3 There are six prose passages here. The first three are, according to SR, the expositions of the three pādas of Gāyatri. These three passages are being quoted from BH—

ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विध-
भूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाव्य-
वधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादान-
विसर्गाभ्यामिमां लोकयात्रामनुवहति । (१२।६।६७)

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोप-
तिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपन-
मण्डलम् । (१२।६।६८)

य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणानना-
त्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥ (१२।६।६९)

In fact these passages should be interpreted as the eulogies of Paramātman only, but not of the solar disc. In the first passage it may be noted that the sun can never alone execute all the activities of the world. This is possible for an entity which is all-pervading and omniscient. Such an extraordinary power is worthy of being worshipped

तदर्थत्वेन सूर्यः स्तुतः, तत् परमात्मदृष्ट्यैव, न तु स्वातन्त्र्येणेत्यदोषः ।

तथैवाग्रे श्रीशौनकवाक्ये[1] "ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ।" इति। न चास्य भर्गस्य सूर्यमण्डलमात्राधिष्ठानत्वम्। मन्त्रे वरेण्यशब्देन, अत्र च ग्रन्थे परशब्देन परमैश्वर्यपर्यन्तताया दर्शितत्वात् । तदेवमग्निपुराणेऽप्युक्तम्—

"ध्यानेन पुरुषोऽयञ्च द्रष्टव्यः सूर्यमण्डले ।
सत्यं सदाशिवं ब्रह्म तद्विष्णोः परमं पदम् ।।" इति ।

त्रिलोकीजनानामुपासनार्थं प्रलये विनाशिनि सूर्यमण्डले चान्तर्यामितया प्रादुर्भूतोऽयं पुरुषो ध्यानेन द्रष्टव्य उपासितव्यः। यत्तु विष्णोस्तस्य महावैकुण्ठरूपं परमं पदं, तदेव सत्यं कालत्रयाव्यभिचारि, सदाशिवमुपद्रवशून्यं यतो ब्रह्मस्वरूपमित्यर्थः। तदेतद्गायत्रीं प्रोच्य पुराणलक्षणप्रकरणे यत्राधिकृत्य गायत्रीमित्याद्यप्युक्तमग्निपुराणे । तस्मात्

'अग्नेः पुराणं गायत्रीं समेत्य भगवत्पराम् ।
भगवन्तं तत्र मत्वा जगज्जन्मादिकारणम् ।।

---

(वरेण्य). cf. "अनेन गायत्रीप्रथमपादोक्तवरेण्यत्वानुवर्णिता"—SR. In the second we find that the solar disc annihilates the seed of all sins and sorrows i.e. अज्ञान. This is possible only by consciousness and not by the solar disc which we visualise. cf. "द्वितीयपादार्थानुवर्णनेन स्तौति यद्वेति :"—SR. In the third passage it is held that Āditya impels all senses, mind, intellect, Vitals (प्राण) etc. But is this possible for the sun whom we see everyday ? These passages are wholly absurd if they are to be taken literally as the praises of the solar disc. For consistency, at least, one must admit that the sun referred to is the Absolute Brahman.

1 v.l...वाक्यम्—D, E.

यत्राधिकृत्य गायत्रीमिति लक्षणपूर्वकम् ।
श्रीमद्भागवतं शश्वत् पृथ्व्यां जयति सर्वतः ॥'

तदेवमस्य शास्त्रस्य गायत्रीमधिकृत्य प्रवृत्तिर्दर्शिता ।

यत्तु सारस्वतकल्पमधिकृत्येति पूर्वमुक्तं, तच्च गायत्र्या भगवत्प्रतिपादकवाग्विशेषरूपसरस्वतीत्वादुपयुक्तमेव । यदुक्त-मग्निपुराणे—

"गायत्युक्थानि शास्त्राणि भर्गं प्राणांस्तथैव च ।
ततः स्मृतेयं गायत्री सावित्री यत एव च ।
प्रकाशिनी[1] सा सवितुर्वाग्रूपत्वात् सरस्वती ॥" इति[2] ।

अथ क्रमप्राप्ता व्याख्या—वेदार्थपरिवृंहित इति । वेदार्थानां परिवृंहणं यस्मात्, तच्चोक्तमितिहासपुराणाभ्यामिति । पुराणानां सामरूप इति वेदेषु सामवत् पुराणेषु श्रेष्ठ इत्यर्थः । पुराणान्तराणां केषाञ्चिदापाततो रजस्तमसी जुषमाणैस्तत्परत्वाप्रतीतत्वे[3]ऽपि वेदानां काण्डत्रयवाक्यैकवाक्यतायां यथा साम्ना तथा तेषां श्रीभागवतेन प्रतिपाद्ये श्रीभगवत्येव पर्यवसानमिति भावः । तदुक्तम्[4]—

"वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥" इति ।

प्रतिपादयिष्यते च तदिदं परमात्मसन्दर्भे । साक्षाद्भगवतोदित इति । 'कस्मै येन विभासितोऽयम्' (भाः १२।१३।१९) इत्युप-संहारवाक्यानुसारेण ज्ञेयम् । शतविच्छेदसंयुत इति । विस्तर-

---

1 v.l. प्रकाशनी

2 Here ends the discussion of the expression गायत्रीभाष्यरूपः.

3 v.l. तत्परत्वस्याप्रतीतत्वे

4 Under Para. 17 BD refers to this śloka as of Hari-vaṃśa. This śloka, although with some variations, is found in the Mahābhārata (Svargārohaṇa, 69.3)

भिया न विव्रियते[1]। तदेवं श्रीमद्भागवतं सर्वशास्त्रचक्रवर्तिपदमाप्तमिति स्थिते 'हेमसिंहसमन्वितम्' इत्यत्र 'हेमसिंहासनमारूढम्' इति टीकाकारैर्यद्व्याख्यातं तदेव युक्तम् ।

अतः श्रीमद्भागवतस्यैवाभ्यासावश्यकत्वं श्रेष्ठत्वञ्च स्कान्दे निर्णीतम्—"शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः।" तदेवं परमार्थविवित्सुभिः श्रीभागवतमेव साम्प्रतं विचारणीयमिति स्थितम् ॥ २२॥

---

1 The word शतविच्छेदसंयुतः has been explained by Śrījiva as having 335 chapters. But this interpretation seems to militate against the commentary of SR who says that BH comprises 332 chapters. (द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः—beginning of BH). This has evoked much discussion. There are some scholars who take this observation of SR to mean as having 332 chapters only. According to them the three chapters (No. 12, 13 & 14) of the tenth Skandha do not belong to the BH as known to SR. But these three chapters have been commented upon by SR and other most celebrated commentators as Madhusūdena etc. Thus there is no justification of branding these commentaries as interpolations. In order to cope with this situation it is contended that the word शत is to be taken as an एकशेष i.e. शतं शतं शतमिति शतानि. Then there will be the समाहारद्वन्द्व compound as द्वात्रिंशत् च त्रयश्च शतानि च द्वात्रिंशत्त्रिशतम्. To put an end to his discussion Śrījiva glosses—शतविच्छेदसंयुतः पञ्चत्रिंशदधिकशतत्रयाध्यायविशिष्ट इत्यर्थः. (P. 39). But he does not enter into this discussion and so observes here—Let me refrain from a lengthy discussion (विस्तरभिया न विव्रियते).

श्रीबलदेवविद्याभूषणकृता टीका

ननु श्रीभागवतस्य भारतार्थनिर्णायकत्वं कथं प्रतीतमिति चेत्तत्राह—तथा तृतीय इति। मुनिरिति मैत्रेयं प्रति विदुरोक्तिः। 'ते' मैत्रेयस्य गुरुपुत्रत्वात् सखा, कृष्णो व्यासः। ग्राम्या गृहिधर्मकर्तव्यतादिलक्षणा। व्यावहारिकी मूषिक-विडाल-गृध्र-गोमायु-दृष्टान्तोपेता च कथा। तत्तत्-स्वार्थकौतुककथाश्रवणाय भारतसदसि समागतानां नृणां श्रीगीतादिश्रवणेन हरौ मतिर्गृहीता स्यादिति तत्कथानुवाद एव। वस्तुतो भगवत्परमेव भारतमिति श्रीभागवतेन निर्णीतमित्यर्थः। सामवेदवदस्य श्रैष्ठ्यं स्कान्दवाक्यं शतशोऽर्थेत्यादि प्रकटार्थम्। तदेवमिति। उक्तगुणगणे सिद्धे सतीत्यर्थः ॥२२॥

अतएव सत्स्वपि नानाशास्त्रेष्वेतदेवोक्तम्—"कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥" (भा: १।३।४५)[1] इति। अर्कतारूपकेण तद्विना नान्येषां सम्यग्वस्तुप्रकाशकत्वमिति[2] प्रतिपद्यते[3]। यस्यैव श्रीमद्भागवतस्य भाष्यभूतं श्रीहयशीर्षपञ्चरात्रे शास्त्रप्रस्तावे गणितं तन्त्रभागवताभिध तन्त्रम्। यस्य साक्षाच्छ्रीहनुमद्भाष्यवासनाभाष्यसम्बन्धोक्तिविद्वत्कामधेनुतत्त्वदीपिकाभावार्थदीपिकापरमहंसप्रियाशुकहृदयादयो व्याख्याग्रन्थाः, तथा

---

1 In the edition of Gitā Press this śloka and the previous one change their positions.

2 As the visual organ reveals the external objects and for this revelation the sun is essential so knowledge reveals the internal phenomena and for that revelation the perusal of BH is essential. Luminaries other than the sun cannot illumine so perfectly (सम्यक्) as the sun does; similarly in this *Kali*-age other texts cannot bring such perfect knowledge as the BH does. cf. चर्मचक्षुर्यथा सूर्यांशस्तथा ज्ञानचक्षुः श्रीभागवतांश इति द्योतनाय श्रीभागवतस्यार्कतया रूपकमिति भावः—RG under Para. 26.

3 B, C read प्रतिपाद्यते ; D, E read प्रतिपद्येत.

मुक्ताफलहरिलीलाभक्तिरत्नावल्यादयो निबन्धाश्च[1] विविधा एव तत्तन्मतप्रसिद्धमहानुभावकृता विराजन्ते । यदेव च हेमाद्रिग्रन्थस्य दानखण्डे पुराणदानप्रस्तावे मत्स्यपुराणीयतल्लक्षणधृत्या प्रशस्तम् । हेमाद्रिपरिशेषखण्डस्य कालनिर्णये च कलियुगधर्मनिर्णये, "कलिं सभाजयन्त्यार्याः" (भाः ११।५।३६)[2] इत्यादिकं यद्वाक्यत्वेनोत्थाप्य यत्प्रतिपादितधर्म एव कलावङ्गीकृतः । अथ यदेव कैवल्यमप्यतिक्रम्य भक्तिसुखव्याहारा[3]दिलिङ्गेन निजमतस्याप्युपरि विराजमानार्थं

---

1 *Nibandha* is a work in which the import of a treatise is dealt with. Obviously the entire treatise cannot be taken up for discussion in such a work. cf. निबन्धस्तत्तात्पर्यवर्णनात्मकतदेकदेशसंग्रहः:—RG.

2 The full śloka is—कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः । यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ It is held in this śloka that *Kali* is the best of the four ages and it is so praised ( सभाजयन्ति ) by the great persons ( आर्याः ). In spite of the many defects of this *Kali*-age the great persons take note of the good element only. The unique privilege of the persons of this age is that they can obtain the highest result only by having recourse to *saṃkīrtana* of Hari. The BH being predominantly a treatise on the devotion of *Hari* teaches the proper course of *dharma* which one must adopt in this *Kali* age. cf. एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह कलिमिति । ....ननु दोषाणां बहुत्वात् कथं सभाजयन्ति तत्राह—सारभागिनो गुणांशग्राहिणः । कोऽसौ गुणस्तमाह यत्रेति । तदुक्तम्—ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ इति ।—SR under BH 11.5.36. Also cf. "तत्प्रतिपादितो धर्मः कृष्णसंकीर्तनलक्षणः"—BD.

3. व्याहारः समुत्कर्षप्रकाशकत्वम्—RG.

मत्वा यदपौरुषेयं वेदान्तव्याख्यानं भयादचालयतैव[1] शङ्करावतारतया प्रसिद्धेन वक्ष्यमाणस्वगोपनादिहेतुकभगवदाज्ञा[2]प्रवर्तिताद्वयवादेनापि तन्मात्रवर्णितविश्वरूपदर्शनकृतव्रजेश्वरीविस्मयश्रीव्रजकुमारीवसन-

---

1 Śaṅkarācārya commented upon the Upaniṣads and the Brahmasūtra also. But he did not comment upon the BH. Had it (BH) been such an important treatise, Śaṅkara should not have left it uncommented. This is the argument advanced by a section of the followers of Śaṅkara against the eternal nature of the BH. Here the Vaiṣṇavas argue that Śaṅkara, being a consistent philosopher, must have then commented upon the BH in pursuance of his doctrine of Māyā. Śaṅkara would have to face a serious consequence for the misinterpretation of the dearest book of Bhagavān i.e. the BH. So out of fear of incurring displeasure of Bhagavān Śaṅkara did not comment upon BH.

2 It is said in Padmapurāṇa that Śaṅkarācārya, the incarnation of Śaṅkara, was advised by Śrikṛṣṇa not to disclose fully the nature of Bhagavān as that would put a premature end to this creation. (cf. प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु। स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु। मां च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा ॥—पद्मपुराण, उः ६२।३१) It is believed by the Vaiṣṇavas that the sophistry of Māyā was created by Śaṅkarācārya with a view to deceiving the people by hoodwinking the Buddhist philosophy. (cf. मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते। मयैव विहितं देवि कलौ ब्राह्मणमूर्तिना ॥—पद्मपुराण, उः २५।७)

चौर्यादिकं गोविन्दाष्टकादौ वर्णयता तटस्थीभूय निजवचःसाफल्याय[1] स्पृष्टमिति ।।२३।।

श्रीबलदेवविद्याभूषणकृता टीका

अतएवेति—वर्णितलक्षणादुत्कर्षादेव हेतोरित्यर्थः । पुरातनानामृषीणामाधुनिकानाञ्च विद्वत्तमानामुपादेयमिदं श्रीभागवतमित्याह—यस्यैवेति । विराजन्ते सम्प्रति प्रचरन्तीत्यर्थः । धर्मशास्त्रकृताञ्चोपादेयमेतदित्याह—यदेव च हेमाद्रीत्यादि । तत्र प्रतिपादितो धर्मः कृष्णसङ्कीर्तनलक्षणः । ननु चेदीदृशं श्रीभागवतं तर्हि शङ्कराचार्यः कुतस्तन्न व्याचष्टेति चेत्तत्राह—अथ यदेव कैवल्यमित्यादि । अयं भावः—प्रलयाधिकारी खलु हरेर्भक्तोऽहमुपनिषदादि व्याख्याय तत्सिद्धान्तं विलाप्य तस्याज्ञां पालितवानेवास्मि । अथ तदतिप्रिये श्रीभागवतेऽपि चालिते स प्रभुर्मयि कुप्येदतो न तच्चाल्यम्, एवं सति मे सारज्ञता सुखसम्पच्च न स्यादतः कथञ्चित्तत् स्पर्शनीयमिति तन्मात्रोक्तं विश्वरूपदर्शनादि स्वकाव्ये निबबन्धेति तेन चादृतं तदिति सर्वमान्यं[1] श्रीभागवतमिति ॥ २३ ॥

---

1 Śaṅkara desired that his organ of speech should not go in vain due to the total abstention from singing the activities of Bhagavān, especially concerning the Vrajabhūmi. Hence he composed the Govindāṣṭaka and narrated the activities of Bhagavān without the least reference to the BH. (cf.तटस्थीभूय श्रीभागवतवर्णितमित्यनुल्लिख्य—RG).

2 The Vaiṣṇavas consider the Advaitins to be the main opposition. BD expresses this in almost clear terms at the beginning of his commentary on TS. (cf. मायावादं यस्तमःस्तोममुच्चैर्नाशं निन्ये etc.—P. 2 and मायावादमहान्धकार etc. P. 2). So by refuting the Advaitavāda or by showing that Śaṅkara himself accepted the authority of the BH, they think that their chief objective has been achieved. This is called प्रधानमल्लनिबर्हणन्याय. Śaṅkara uses this maxim in his bhāṣya on Br. Sūtra 1.4.28.

यदेव किल दृष्ट्वा श्रीमध्वाचार्यचरणैर्वैष्णवान्तराणां[1] तच्छिष्यान्तर[2]पुण्यारण्या[3]दिरीतिकव्याख्याप्रवेशशङ्कया तत्र तात्पर्यान्तरं लिखद्भिर्वर्त्मोपदेशः कृत इति च सात्वता[4] वर्णयन्ति। तस्माद् युक्तमुक्तं तत्रैव प्रथमस्कन्धे—

तदिदं ग्राहयामास सुतमात्मवतां[5] वरम् ॥
सर्ववेदेतिहासानां सारं सारं[6] समुद्धृतम् ।
(भाः १।३।४१-४२)

---

1 The sixth case-ending of this word is in connection with the word प्रवेश in the next compound word.

2 The reading of this sentence seems to be defective. There are two expressions here तच्छिष्यतां and यस्यैव—which have been commented upon by RG ; but in current editions those are not found. Cf. 'तच्छिष्यतां शङ्कराचार्यशिष्यतां वर्णयन्तीति' and 'यस्यैवेत्यादौ यत् पदानामुत्तरवाक्यस्थतया न तत् पदापेक्षेति'. Evidently RG construes तच्छिष्यतां with वर्णयन्ति, at the end of the sentence. वर्णयन्ति is once construed with वर्त्मोपदेशः कृत इति and तच्छिष्यतां being the other object, the use of च becomes justified. Otherwise, in the present reading the particle च is useless. Should the word तच्छिष्यान्तर be replaced by तच्छिष्यतां ? But this is not a happy suggestion. May be that a few words or even a complete line has been omitted here due to the inadvertence of the scribe.

3 It is very difficult to identify these commentators.

4 Sātvat is the land of Kṛṣṇa. Hence Sātvata means Kṛṣṇa, and secondarily, a devotee of Kṛṣṇa.

5 RG reads आत्मविदां. cf. "आत्मविदां ब्रह्मविदां —RG. SR glosses आत्मवतां धीराणाम्.

6 "सारं सारमिति वीप्सया सकलसारोद्धारो बोध्यते। सारश्च भगवन्माहात्म्यं तद्भजनं च। तत्सारत्वं विना मुक्तस्यापि शुकस्य कथमत्र प्रवृत्तिरिति भावः"—RG.

द्वादशे —

सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥
(भाः १२।१३।१५)

तथा प्रथमे —

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं[1] मुहुरहो रसिका भुवि भावुकाः ॥
(भाः १।१।३)

अतएव तत्रैव—

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥
(भाः १।२।३) इति

1 Literally the word आलयम् means up to *laya* or *mokṣa*. Here BD draws our attention to the Vaiṣṇava stand that the drinking of the juice of BH continues even after the attainment of *mokṣa*. The Advaitins hold that all enjoyment ceases with emancipation (*mokṣa*) but the Vaiṣṇavas refute it. Thus the prefix आङ् here means अभिविधि and not मर्यादा. cf. "आलयं मोक्षमभिव्याप्येत्यर्थः"—BD.

श्रीभागवतमतं तु सर्वमतानामधीशरूपमिति सूचकम्। सर्व-मुनीनां सभामध्यमध्यास्योपदेष्टृत्वेन[1] तेषां गुरुत्वमपि तस्य तत्र सुव्यक्तम्[2] ॥२८॥

श्रीबलदेवविद्याभूषणकृता टीका।

श्रीमध्वमुनेस्तु परमोपास्यं श्रीभागवतमित्याह—यदेव किलेति। शङ्करेण नैतद्विचालितं किन्त्वादृतमेवेति विभाव्येत्यर्थः किन्तु तच्छिष्यैः पुण्यारण्यादि-भिरेतदन्यथा व्याख्यातं तेन वैष्णवानां निर्गुणचिन्मात्रपरमिदमिति भ्रान्तिः स्यादिति शङ्कया हेतुना तद्भ्रान्तिच्छेदाय तत्र तात्पर्यान्तरं भगवत्परतारूपं ततोऽन्यत्तात्पर्यं लिखद्भिस्तस्य व्याख्यानवर्त्मोपदिष्टं वैष्णवान् प्रतीति। मध्वाचार्यचरणैरिति—अत्यादरसूचकबहुत्वनिर्देशः, स्वपूर्वाचार्यत्वादिति बोध्यम्। वायुदेवः खलु मध्वमुनिः सर्वज्ञोऽतिविक्रमी यो दिग्विजयिनं चतुर्दश-विद्यं चतुर्दशभिः क्षणैर्निर्जित्यासनानि तस्य चतुर्दश जग्राह। स च तच्छिष्यः पद्मनाभाभिधानो बभूवेति प्रसिद्धम्। तस्मादिति प्रोक्तगुणकत्वाद्धेतोरित्यर्थः। आलयमिति मोक्षमभिव्याप्येत्यर्थः। य इति—अन्धं तमोऽविद्यामतितितीर्षतां संसारिणां करुणया यः पुराणगुह्यं श्रीभागवतमाहेत्यन्वयः। स्वानुभाव-मसाधारणप्रभावमित्यर्थः ॥२४॥

---

1 RG points out that Śuka may be said to be the *guru* of the sages because he is superior in wisdom; but in primary sense Śuka is not their *guru* because he did not instruct them. "गुरुत्वं ज्ञानातिशयतः न तूपदेष्टृत्वम्, मुनीनामिति सामान्यतो निर्देशात्।"—RG. Śuka instructed परीक्षित् and the most revered sages were present there. The word उपदेष्टृत्वेन in TS should be so under-stood. Cf. "एकस्योपदेष्टृत्वेनेत्यस्य परीक्षितं प्रत्युपदेष्टृत्वेनेत्यर्थः।"—RG. This point has to some extent been clarified by JG himself, and more perspicuously by RG, in Para. 26.

2 The two lines from श्रीभागवतमतं तु etc. to तस्य तत्र सुव्यक्तम् is omitted in B and C. But D and E read this portion at the beginning of Para. 25.

[1]यतः—

तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ।।
अत्रिर्वसिष्ठ[2]श्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ[3] ।।
मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ।।
अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च ।
नानार्षेयप्रवरान् समेतानभ्यर्च्य राजा शिरसा ववन्दे ।।
सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास विविक्तचेता उपस्थितोऽग्रे निगृहीतपाणिः[4] ।।
(भाः १।१९।८–१२)

इत्याद्यनन्तरम्—

ततश्च वः पृच्छ्यमिदं विपृच्छे
विश्रभ्य विप्रा इतिकृत्यतायाम् ।
सर्वात्मना म्रियमाणैश्च कृत्यं
शुद्धञ्च तत्रामृशताभियुक्ताः ।। (भाः १।१९।२४)

इति पृच्छति राज्ञि—

तत्राभवद् भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः ।।
(भाः १।१९।२५)

---

1 The entire paragraph is purported to prove the venerability of Śuka. The word यतः is to be construed with इत्युक्तम् , the last word of the paragraph.

2 Editions from Bengal generally read वशिष्ठ.

3 BH edited by P. Tarkaratna reads इन्द्रप्रमदः सुबाहुः

4 BH reads. .ग्रेऽभिगृहीतपाणिः.

ततश्च—'प्रत्युत्थितास्ते मुनयः स्वासनेभ्यः' ( भाः १।१९।२८ ) इत्याद्यन्ते—

स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिसुरर्षिवर्यैः ।
व्यरोचतालं भगवान् यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥
(भा १।१९।३०)

इत्युक्तम् ॥२५॥

श्रीबलदेवविद्याभूषणकृता टीका

मुनीनां गुरुमित्युक्तम्, तत् कथमित्यत्राह—यत इति । यत इत्यस्य 'इत्युक्त'मिति परेण सम्बन्धः । और्व इति विप्रवंशं विनाशयद्भ्यो दुष्टेभ्यः क्षत्रियेभ्यो भयाद् गर्भादाकृष्योरौ तन्मात्रा स्थापितस्ततो जातः क्षत्रियांस्तान् स्वेन तेजसा भस्मीचकार इति भारते कथास्ति[1] । निगृहीतपाणि-र्योजिताञ्जलिपुटः । एवंकर्तव्यस्य भाव इतिकर्तव्यता, तस्यां विषये सर्वावस्थायां पुंसः किं कृत्यं, तत्रापि म्रियमाणैश्च किं कृत्यं, तच्च शुद्धं हिंसाशून्यं, तत्रामृशत यूयम् । गां पृथिवीम् । अनपेक्षो निःस्पृहः । निजस्य शुद्धिपूर्तिकर्तुः स्वस्वामिनः कृष्णस्य लाभेन तुष्टः । तत्र सभायाम् ॥ २५ ॥

अत्र यद्यपि तत्र श्रीव्यासनारदौ तस्यापि गुरुपरमगुरू, तथापि पुनस्तन्मुखनिःसृतं श्रीभागवतं तयोरप्यश्रुतचरमिव जातमित्येवं श्रीशुकस्तावप्युपदिदेश देश्यमित्यभिप्रायः[2] । यदुक्तं "शुकमुखाद-

---

1 आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥
( महाभारत, आदिपर्व, ६६।४६)

2 Vyāsa and Nārada were respectively the preceptor and grand-preceptor of Śuka. There were other senior sages who could not be instructed by Śuka. Thus the expression उपदिदेश should not be taken literally; on the other hand, it should mean 'reminded' because these sages, who knew everything, were only reminded of the truths contained

मृतद्रवसंयुतम्' (भा: १।१।३) इति। तस्मादेवमपि श्रीभागवतस्यैव सर्वाधिक्यम्। मात्स्यादीनां यत् पुराणाधिक्यं श्रूयते तत्त्वापेक्षिकमिति। अहो किं वहुना, श्रीकृष्णप्रतिनिधिरूपमेवेदम्। यत उक्तं प्रथमस्कन्धे—

कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः॥

(भा: १।३।४५) इति।

अतएव सर्वगुणयुक्तत्वमस्यैव दृष्टं "धर्मः प्रोज्झितकैतवोऽत्र[1]" (भा: १।१।२) इत्यादिना,

---

in the BH. So Śuka may be said to have instructed these sages even. As an alternative explanation it is also held by RG that Śuka's technique of teaching the BH was unparallelled and in this respect he may be called the *guru* of all. Here RG says, it is not that Vyāsa was not aware of this method but he was astonished to listen to the novel process of teaching which was altogether different from the one adopted by Vyāsa. Only in this respect can Śuka be called the teacher of the sages. Cf. "उपदिदेश स्मारयामास। यद्वा, देश्यं मधुरव्याख्यानकौशलमुपदिदेशैवेत्यर्थः, अश्रुतचरमिवेत्युक्तत्वात्। तथा च तयोरपि तथा व्याख्यानकौशलयोग्यत्वेऽपि शुकदेवं प्रति तथानुपदेशादिति भावः।"—RG..

1 The BH contains supreme *dharma* inasmuch as it eschews all deceits (कैतव) such as the desire for results including *mokṣa.* The supreme ( परम ) *dharma* as the worship of God alone permeates through the BH. Cf. "अत्र श्रीमति सुन्दरे भागवते परमो धर्मो निरूप्यत इति। परमत्वे हेतुः प्रकर्षेणोज्झितं कैतवं फलाभिसन्धिलक्षणं कपटं यस्मिन् सः। प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः। केवलमीश्वराराधनलक्षणो धर्मो निरूप्यत इति।"—SR under BH 1.1.2.

वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च ।
बोधयन्तीति हि प्राहुस्त्रिवृद्[1] भागवतं[2] पुनः ॥

इति मुक्ताफले हेमाद्रिकारवचनेन च । तस्मान्मन्यन्तां वा केचित् पुराणान्तरेषु वेदसापेक्षत्वं श्रीभागवते तु तथा सम्भावना स्वयमेव निरस्तेत्यपि स्वयमेव लब्धं भवति[3] । अतएव परमश्रुति-रूपत्वं तस्य । यथोक्तम् —

कथं वा पाण्डवेयस्य[4] राजर्षेर्मुनिना सह ।
संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः[5] ॥
(भाः १।४।७) इति ।

अथ यत् खलु सर्वं पुराणजातमाविर्भाव्येत्यादिकं पूर्वमुक्तं तत्तु प्रथमस्कन्धगतश्रीव्यासनारदसंवादेनैव प्रमेयम् ॥२६॥

---

1 त्रिवृत् means threefold, triform.

2 "वेदा इति—वेदाः प्रभुरिव बोधयन्तीत्यन्वयः । प्रभुपदेन राजेत्युच्यते । तथा च राजा यथाज्ञापयति तथैवामात्यादयः कुर्वन्ति, न तु तद्वाक्यं भद्रमभद्रं चेति विचारयन्ति । तथा वेदवचनेन विहितं कर्म विद्वांसो यथा यथाऽभिहितं प्रमाणनिरपेक्षं तथैव कुर्वन्ति । पुराणं मित्रमिव प्रमाणयुक्तिसापेक्षं बोधयति । ......काव्यं काव्यशास्त्रं प्रियेव कान्तेव सरसतामापादयद्बोधयति । भागवतं भागवताख्यं शास्त्रं त्रिवृत् प्रभुमित्रकान्तासदृक्, वेद इव प्रमाणनिरपेक्षतया प्रभुरिव, इतरपुराणमिव प्रमाणयुक्तिसम्वलितत्वेन हितबोधकत्वेन च मित्रमिव, कान्तेव सरसतापादनं चेति सर्वोत्तममित्यर्थः ।"—RG.

3 "भवति" is dropped in B & C.

4 The descendant of Pāṇḍava ; here the King Parikṣit is referred to.

5 सात्वती भागवती—RG. It is expressly mentioned here that the BH is श्रुति . Also Cf. "परमार्थवेदकत्वाद् वेदान्तस्यैव भागवतस्य परमश्रुतिरूपत्वमित्यर्थः"—BD.

श्रीबलदेवविद्याभूषणकृता टीका

वक्तव्यं योजयत्यत्र यद्यपीत्यादिना । तस्मादेवमिति—तद्वक्तुः श्रीशुकस्य सर्वगुरुत्वेनापीत्यर्थः । आपेक्षिकमिति—एतदन्यपुराणापेक्षयेत्यर्थः । अथ परमोत्कर्षमाह—अहो किमिति । अतएवेति—कृष्णप्रतिनिधित्वात् कृष्णवत् सर्वगुणयुक्तत्वमित्यर्थः । प्रियेव—कान्तेव । त्रिवृत्—वेदादित्रयगुणयुक्तमित्यर्थः । तस्मादिति, वेदसापेक्षत्वं वेदवाक्येन पुराणप्रामाण्यमित्यर्थः । अतएवेति—परमार्थवेदकत्वाद् वेदान्तस्येव भागवतस्य परमश्रुतिरूपत्वमित्यर्थः । यत्र संवादे । सात्वती वैष्णवीत्यर्थः । अथेति—"इदं भगवता पूर्वम्"[1] —इत्यादिद्वादशोक्तेर्ब्रह्मनारायणसंवादरूपमष्टादशसु मध्ये प्रकटितं, व्यासनारदसंवादरूपं तथैव प्रवेशितं, तदुभयस्य लक्षणसंख्ये तु मात्स्यादावुक्ते इति बोध्यमित्यर्थः । एवमेव भारतोपक्रमेऽपि दृष्टम् । आदावाख्यानैर्विना चतुर्विंशतिसहस्रं भारतं[2] ततस्तैः सहितं पञ्चाशत्सहस्रं ततस्तैस्ततोऽप्यधिकमितोऽप्यधिकमिति तद्वत् ॥ २६ ॥

---

1 इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ।
स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम् ॥
(भाः १२।१३।१०)

2 उपाख्यानैः सह ज्ञेयमाद्यं भारतमुत्तमम् ।
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ॥
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः ।
ततोऽध्यर्धशतं भूयः संक्षेपं कृतवानृषिः ॥
अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्वणाम् ।
इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम् ॥
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः ।
षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ॥
( महाभारत, आदि, १।१०२-५ )

तदेवं परमनिःश्रेयसनिश्चयाय[1] श्रीभागवतमेव[2] पौर्वापर्याविरोधेन विचार्यते। तत्रास्मिन् सन्दर्भषट्कात्मके ग्रन्थे सूत्रस्थानीयमवतारिकावाक्यं[3] विषयवाक्यं श्रीभागवतवाक्यम्[4]। भाष्यरूपा तद्व्याख्या तु सम्प्रति मध्यदेशा[5]दौ व्याप्तानद्वैतवादिनो नूनं भगवन्महिमानमवगाहयितुं[6] तद्वादेन[7] कर्बुरितलिपीनां

---

1 RG adds the means also and says—परमनिःश्रेयसनिश्चयाय परमनिःश्रेयसतत्साधननिश्चयाय.

2 BD poses a question that the Vedas being the accredited *pramāṇa*, one must discuss the import of the Vedas, and not of a Purāṇa like the BH. The answer is that the Purāṇas are included in the Vedas and so the discussion of the Purāṇas is tantamount to that of the Vedas.

3 RG reads अवतारणिकावाक्यम् and glosses—"भागवतवचनोत्थापकाकाङ्क्षोत्थापकवाक्यम्".

4 As in the Brahmasūtra some problematic sentences of the Upaniṣads have been taken up for discussion, so in these six *Sandarbhas* of JG some important and doubtful issues of BH have been discussed. Cf. "अत्र ब्रह्मसूत्रभाष्यरीत्या सन्दर्भस्यास्य प्रवृत्तिरित्याह—तत्रास्मिन्निति।"—BD.

5 हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥ ( मनु २।२१ )

Medhātithi warns that the term मध्यदेश should not be misunderstood to be the region lying in the middle of the earth. The term may be justified as the region which is neither the best nor the worst in culture. "नात्युत्कृष्टो नातिनिकृष्ट इत्यतोऽयं मध्यदेशो न तु पृथिवीमध्यभवत्वात्"—Medhātithi.

6 "अवगाहयितुं बोधयितुम्"—RG.

7 "तद्वादेनाद्वैतवादिमतबोध(क)त्वेन"—RG.

परमवैष्णवानां[1] श्रीधरस्वामिचरणानां शुद्धवैष्णवसिद्धान्तानुगता[2] चेत्तर्हि यथावदेव विलिख्यते । क्वचित्तेषामेवान्यत्रदृष्ट[3]व्याख्यानुसारेण द्रविडादिदेशविख्यातपरमभागवतानां—[4]तेषामेव वाहुल्येन तत्र वैष्णवत्वेन प्रसिद्धत्वात्, श्रीभागवत एव, "क्वचित् क्वचिन्महाराज द्रविडेषु[5] च भूरिशः" (भा० ११।५।३९) इत्यनेन—प्रथितमहिम्नां[6] साक्षाच्छ्रीप्रभृतितः प्रवृत्तसम्प्रदायानां[7]

---

1 Śrīdharasvāmin comments on BH, the most endeared book of the Vaiṣṇavas. As he utilises the doctrine of Māyā in the exposition of BH, he can hardly be deemed an exponent of the Vaiṣṇava School. But the Vaiṣṇavas observe that in view of his certain well-known categorical statements he must be deemed a Vaiṣṇava ; and the doctrine of Māyā requisitioned in this commentary should be considered only as an alluring bait for the Advaitins who would be attracted by *māyāvāda* and finally accept the Vaiṣṇava philosophy as their own. This is the reason that in the commentary of BH the Advaita views are found interspersed with the Vaiṣṇava thoughts. Cf. commentary of BD.

2 "व्याख्येति शेषः"—RG.

3 B and C drop 'दृष्ट'.

4 The portion from तेषामेव to इत्यनेन is a parenthetic expression.

5 "द्रविडेष्विति बहुवचनेन कार्णाटादिपरिग्रहः"—RG. The plural number might have been justified by जनपदे लुप् (Pāṇ. Sū. 1.2.81) and लुपि युक्तवद् व्यक्तिवचने (Pāṇ. Sū. 1.2.51).

6 A reads प्रथितमहिम्नां.

7 Tradition goes that the line of a section of Vaiṣṇavas starts from the goddess Lakṣmī (Śrī). Hence comes the appellation Śrīvaiṣṇava or Śrīsampradāya. Śrīrāmānuja is the chief exponent of this school.

श्रीवैष्णवाभिधानां[1] श्रीरामानुजभगवत्पादविरचितश्रीभाष्यादिदृष्टमतप्रामाण्येन मूलग्रन्थस्वारस्येन चान्यथा च। अद्वैतव्याख्यानन्तु प्रसिद्धत्वान्नातिवितायते ॥ २७ ।

### श्रीबलदेवविद्याभूषणकृता टीका

तदेवमिति। ननु वेद एवास्माकं प्रमाणमिति प्रतिज्ञाय पुराणमेव तत् स्वीकरोतीति किमिदं कौतुकमिति चेन्मैवं भ्रमितव्यम् "एवं वा अरेऽस्य महतो भूतस्य ( बृ० उ० २।४।१०) इत्यादिश्रुत्यैव पुराणस्य वेदत्वाभिधानात्। वेदेषु वेदान्तस्येव पुराणेषु श्रीभागवतस्य श्रेष्ठत्वनिर्णयाच्च तदेव प्रमाणमिति किमसङ्गतमुक्तमिति। अथ ब्रह्मसूत्रभाष्यरीत्या सन्दर्भस्यास्य प्रवृत्तिरित्याह—तत्रास्मिन्निति। विचारार्हवाक्यं विषयवाक्यम्। भाष्यरूपा तद्व्याख्येति। अयमर्थः—श्रीधरस्वामिनो वैष्णवा एव, तट्टीकासु भगवद्विग्रहगुणविभूतिधाम्नां तत्पार्षदतनूनाञ्च नित्यत्वोक्तेः, भगवद्भक्तेः सर्वोत्कृष्टमोक्षानुवृत्त्योक्तेश्च। तथापि क्वचित् क्वचिन्मायावादोल्लेखस्तद्वादिनो भगवद्भक्तौ प्रवेशयितुं बडिशामिषार्पणन्यायेनैवेति विदितमिति। शुद्धवैष्णवेति—यथा सांख्यादिशास्त्राणामविरुद्धांशः सर्वैः स्वीकृतस्तद्वदिदं बोध्यम्[2]। क्वचित्स्वपारोवेति—क्वचित् स्थलान्तरीयस्वामिव्याख्यानुसारेण श्रीभाष्यादिदृष्टमतप्रामाण्येन मूलश्रीभागवतस्वारस्येन चान्यथा च भाष्यरूपा तद्व्याख्या मया लिख्यत इति

---

1 The sixth case-ending is to be construed wth मत in the next compound word. "श्रीवैष्णवाभिधानामित्यस्य मतेत्यनेनान्वयः" —RG.

2 JG accepts some of the doctrines preached by SR but some other views of SR have been forsaken. This has often aroused the sarcastic remarks of the opponents. But partial acceptance of others' views is nothing new because the common features of the systems as Sāṅkhya, etc. have been accepted by other systems. So JG also admits some speculations of SR and disavows some others.

मत् कपोलकल्पनं किञ्चिदपि नास्तीति प्रमाणोपेतात्र टीकेत्यर्थः। ननु पूर्वपक्षज्ञानायाद्वैतञ्च व्याख्येयमिति[1] तत्राह—अद्वैतेति ॥२७ ॥

अत्र च स्वदर्शितार्थविशेषप्रामाण्यायैव, न तु श्रीमद्भागवतवाक्य-प्रामाण्याय, प्रमाणानि श्रुतिपुराणादिवचनानि यथादृष्टमेवोदा-हरणीयानि ; क्वचित् स्वयमदृष्टाकराणि[2] च तत्त्ववाद[3]गुरूणा-मनाधुनिकानां[4] प्रचुरप्रचारितवैष्णवमतविशेषाणां दक्षिणादिदेश-विख्यातशिष्योपशिष्यीभूतविजयध्वजव्यासतीर्थादिवेदवेदार्थविद्वराणां श्रीमध्वाचार्यचरणानां भागवततात्पर्यभारततात्पर्यब्रह्मसूत्रभाष्या-दिभ्यः संगृहीतानि । तैश्चैवमुक्तं भारततात्पर्ये—

शास्त्रान्तराणि संजानन् वेदान्तस्य प्रसादतः ।
देशे देशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ॥
यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ।
जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ॥

इति ।

---

1 In order to have a proper appraisal of the philosophical thoughts of a particular system, one must get oneself acquainted with the views of the opponents. So JG must first explain the chief doctrines of the Advaitins, the main opposition of JG. But he desists from such a detailed study of the Advaita system since it has already gained considerable celebrity among the philosophers.

2 RG reads अदृष्टचराणि.

3 BD glosses as सर्वं वस्तु सत्यमिति वादस्तत्त्ववादः, which is a bit strained. But RG interprets as तत्त्वविचार.

4 RG here reads a clause in excess—श्रीशङ्कराचार्यशिष्यतां लब्ध्वापि श्रीभगवत्पक्षपातेन ततो विच्छिद्य ।

तत्र तदुद्धृता श्रुतिश्चतुर्वेदशिखाद्या, पुराणञ्च गारुडादीनां सम्प्रति सर्वत्राप्रचरद्रूपमंशादिकम्, संहिता च महासंहितादिका, तन्त्रञ्च तन्त्रभागवतादिकं ब्रह्मतर्कादिकमिति ज्ञेयम्[1] ।।२८।।

श्रीबलदेवविद्याभूषणकृता टीका ।

अत्रेति । इह ग्रन्थे यानि श्रुतिपुराणादिवचनानि मया ध्रियन्ते तानि स्वदर्शितार्थविशेषप्रामाण्यायैव, न तु श्रीभागवतवाक्यप्रामाण्याय, तस्य स्वतःप्रमाणत्वात्[2] । तानि च यथादृष्टमेवोदाहरणीयानि मूलग्रन्थान् विलोक्योत्थापितानीत्यर्थः । कानिचिद्वाक्यानि तु मददृष्टाकराण्यस्मदाचार्य-श्रीमध्वमुनिदृष्टाकराण्येव क्वचिन्मया ध्रियन्त इत्याह—क्वचिदिति । मद्व्याख्याने क्वचिदर्थविशेषे प्रामाण्याय श्रीमध्वाचार्यचरणानां भागवततात्पर्या-दिभ्यो ग्रन्थेभ्यः संगृहीतानि श्रुतिपुराणादिवचनानि ध्रियन्त इत्यनुषङ्गः ।[3] अत्रास्य ग्रन्थकर्तुः सत्यवादित्वं ध्वनितम् । 'कौमारब्रह्मचर्यवान्नैष्ठिको यः

---

1 This word is dropped in B and C.

2 As it has been shown earlier, BH is an eternal literature and requires no proof for its validity. So, the passages or verses which have been cited here are not meant for the proof of the validity of BH, but they have been requisitioned only with a view to showing the validity of the contention of the present author viz. JG.

3 It is expected of a writer that he should personally verify each and every quotation referred to by him in his work. JG has not been able to verify some references due to the obsolescence of some of the Śāstras. Thus he has to depend upon the ancients who freely utilised the then prevalent works. In Bengal Śricaitanya declared that his philosophical ideals were closely similar to those of Madhvācārya. So JG has often made use of the testimonial evidences from the works of Madhvācārya. Now the difficulty lies in the checking up of the citations from a cryptic introduction as 'तथा च स्कान्दे' or 'पाद्मे' inasmuch as these Purāṇas are heavy tomes with a good number of big Khaṇḍas.

सत्यतपोनिधिः स्वप्नेऽप्यनृतं नोचे चे'ति प्रसिद्धम् । तेषां कीदृशानामित्याह—तत्त्वेति । सर्वं वस्तु सत्यमिति वादस्तत्त्ववादस्तदुपदेष्टृणामित्यर्थः । अनाधुनिकानामतिप्राचीनानां केनचिच्छाङ्करेण सह विवादे मध्वस्य मतं व्यासः स्वीचक्रे, शङ्करस्य तु तत्याजेत्यैतिह्यमस्ति[1] । प्रचारितेति—भक्तानां विप्राणामेव मोक्षः, देवा भक्तेषु मुख्याः, विरिञ्चस्यैव सायुज्यम्, लक्ष्म्या जीवकोटित्वमित्येव मतविशेषः[2] । दक्षिणादिदेशेति—तेन गौडेऽपि माधवेन्द्रा[3]दयस्तदुपशिष्याः कतिचिद् बभूवुरित्यर्थः । शास्त्रान्तराणीति—

---

1 We are not aware of any ancient authentic work which supports the above tradition.

2 The special tenets of the various Vaiṣṇava sects have very nicely been summarised by RG. It is also worth noticing that JG utilises the doctrines of other Vaiṣṇava sects in so far as they are found logical ; but he does not hesitate to differ where he finds fault with their arguments. "अत्रेदमवधेयम्—महानुभावश्रीधरस्वामिप्रभृतिमतेषु यद्युक्तिशास्त्रनिर्णीतं तत्तदेव मतं संकलय्य स्वमतमाविष्कृतम्, न त्वेतेषां कस्यापि सम्प्रदायान्तर्गतोऽयं ग्रन्थकार इति दर्शितम् ।....तत्र भागवतसम्प्रदायान्तर्गतः श्रीधरस्वामी, तस्य वैकुण्ठनाथप्रधानतया भागवतव्याख्यानेऽपि तद्व्याख्यातभगवद्रूपतद्भक्तिप्राधान्यमेवादृतं न तु सर्वं तन्मतम् । तथा श्रीमद्रामानुजाचार्यो विशिष्टाद्वैतवादी....तन्मतमपि सर्वं श्रीभागवततात्पर्यविषयः । किन्तु मायावादनिरासजीवतत्त्वजगत्सत्यत्वादितद्वर्णितांशमादाय स्वव्याख्यापोषणमत्र ग्रन्थे कृतम् । तथा श्रीमध्वाचार्यस्य द्वैतवादिनोऽपि न सर्वं मतं गृहीतम् ।"—RG.

3 Mādhavendra Purī, the disciple of Madhva Sect, is the *guru* of Īśvara Purī who consecrated the *dikṣā mantra* to Śrīcaitanya. In philosophical and spiritual fields the disciple has every right to think anew and he may differ from his *guru* as regards the path of realisation. Thus no charge of disrespect may be levelled against Śrīcaitanya for the institution of a new sect. cf. "श्रीमन्मध्वाचार्यो यथा श्रीमच्छङ्कराचार्यशिष्योऽपि ब्रह्मसम्प्रदायमाश्रित्य ब्रह्मसूत्रभाष्यादिकं कृत्वा स्वातन्त्र्येण सम्प्रदायप्रवर्तकस्तथा स्वयंभगवदवतारोऽपि श्रीकृष्णचैतन्यः स्वमतमेव तत्सम्प्रदायान्तर्गतत्वं गुर्वाश्रयणस्यावश्यकत्वमङ्गीकृत्य प्रवर्तितवान् ।"—RG.

तेन स्वस्य दृष्टसर्वाकरता व्यज्यते दिग्विजयित्वं चेत्युपोद्घातो[1] व्याख्यातः ॥ २८॥

अथ नमस्कुर्वन्नेव तथाभूतस्य श्रीमद्भागवतस्य तात्पर्यं तद्वक्तु-हृदयनिष्ठापर्यालोचनया[2] संक्षेपतस्तावन्निर्धारयति[3]--

"स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽ-
प्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
व्यतनुत कृपया यस्तत्त्वदीपं पुराणं
तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥
(भा: १२।१२।६९)

---

1 Before determining the *prameya* one must be aware of the *pramāṇa*. Thus this treatise, which seeks to determine the *prameya*, first determines in these twentyeight paragraphs the *pramāṇa* only and in this way these paragraphs serve as the introduction ( उपोद्घात ) of the whole book.

2 The import ( तात्पर्य ) of a work lies in the tenet which specially occupies the mind of the author. So the import of BH will be determined by the idea which occupied the mind of the teacher of BH viz. Śukadeva. TS, which is in fact a collection of the chief recondite ideas of BH, is purported to establish the *prameya* of BH ; that is why JG quotes a śloka of BH for determining the *prameya* of TS. The mind of Śukadeva remained permeated with the charming activities of Śrikṛṣna ( अजितरुचिरलीलाकृष्टसारः ).

3 The verb should be construed with "श्रीसूतः श्रीशौनकम्" at the end of this paragraph and a word 'प्रति' should be supplied, cf. " 'श्रीसूतः श्रीशौनकं प्रति निर्धारयति' इत्यवतारिकावाक्येन सम्बन्धः । एवमुत्तरत्र सर्वत्र बोध्यम्."—BD. "श्रीसूतः श्रीशौनकं प्रतीति । अस्य 'अथ नमस्कुर्वन्नेव' इत्यादि चूर्णिकावाक्यस्थेन निर्धारयतीत्यनेनान्वयः । एवमुत्तरत्र निर्धारयतीति पदेन श्रीसूतः श्रीशौनकं प्रतीत्यस्यान्वयः"—RG.

टीका च श्रीधरस्वामिविरचिता—"श्रीगुरुं नमस्करोति । स्वसुखेनैव निभृतं पूर्णं चेतो यस्य सः[1] । तेनैव व्युदस्तोऽन्यस्मिन् भावो भावना[2] यस्य तथाभूतोऽप्यजितस्य रुचिराभिर्लीलाभिराकृष्टः सारः स्वसुखगतं धैर्यं[3] यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत तं नतोऽस्मि" इत्येषा । एवमेव द्वितीये तद् वाक्यमेव "प्रायेण मुनयो राजन्" (भाः २।१।७) इत्यादिपद्यत्रयमनुसन्धेयम् । अत्राखिलवृजिनं तादृशभावस्य[4] प्रतिकूलमुदासीनञ्च ज्ञेयम् । तदेवमिह सम्बन्धितत्त्वं ब्रह्मानन्दादपि प्रकृष्टो[5] रुचिरलीलाविशिष्टः श्रीमानजित एव । स च पूर्णत्वेन मुख्यतया श्रीकृष्णसंज्ञ एवेति श्रीबादरायणसमाधौ व्यक्तीभविष्यति । तथा प्रयोजनाख्यः पुरुषार्थश्च तादृशतदासक्तिजनकं तल्लीलाश्रवणादिलक्षणं तद्भजनमेवेत्यायातम् । अत्र व्याससूनुमिति ब्रह्मवैवर्तानुसारेण श्रीकृष्णवराज्जन्मत एव मायया तस्यास्पृष्टत्वं सूचितम् । (१२।१२)[6] श्रीसूतः श्रीशौनकम् ।।२६।।

---

1 P. Tarkaratna's edition drops this word from the commentary of SR.

2 B and C drop this word. Such is the case with SR's commentary also.

3 SR's commentary reads स्थैर्यं. The reading धैर्यं is supported by RG.

4 "तादृशभावस्येति मुक्तानामप्याकर्षकस्य भगवद्भावस्येत्यर्थः ।"—RG.

5 RG reads प्रकृष्टरुचिर etc.

6 In this paragraph figures as 12.12 are found twice—one is just after the śloka of BH and the other is at the end of the interpretation of that śloka. The figures here are related to the words following and this will mean that Śrīsūta instructed in the thoughts to Śrīśaunaka in the twelfth adhyāya of the twelfth skandha. cf. "अथ नमस्कुर्वन्नेवेति सूत्रस्थानीयस्याभास(?ष)वाक्यस्य विषयस्थानीयश्रीभागवतवाक्यसमाप्तावङ्कविन्यासस्तद्वाक्यसङ्गतिगणनापरः, स च क्रमसन्दर्भानुकूलो भविष्यति । तत्र व्याख्यासमाप्तावङ्कविन्यासविशेषस्यायमर्थः— द्वादशस्कन्धे द्वादशाध्याये श्रीसूतः "—SS.

श्रीबलदेवविद्याभूषणकृता टीका।

अथ "यस्य ब्रह्मेति" (६ पृः) पद्योक्तं सम्बन्धिकृष्णतत्त्वं, तद्भक्तिलक्षणमभिधेयं, तत्प्रेमलक्षणं पुमर्थञ्च निरूपयता पद्येन तावद्ग्रन्थं प्रवर्तयन् ग्रन्थकृदवतारयति—अथेति मङ्गलार्थम्। यस्मिन् शास्त्रवक्तुर्हृदयनिष्ठा प्रतीयते तदेव शास्त्रप्रतिपाद्यवस्तु, न त्वन्यदित्यर्थः। स्येति—तदीयमजितनिरूपकं पुराणमित्यर्थः। टीका नेति--स्वसुखेनेति। स्वमसाधारणं जीवानन्दादुत्कृष्टम्, गुडादिव मधु, यदनभिव्यक्तसंस्थानगुणविभूतिलीलमानन्दरूपं स्वप्रकाशं ब्रह्मशब्दव्यपदेश्यं वस्तु, तेनेत्यर्थः। रुचिराभिरिति पारमैश्वर्यसमवेतमाधुर्यसंभिन्नत्वान्मनोज्ञाभिरानन्दैकरूपाभिः पानकरसन्यायेन स्फुरदजिततत्परिकरादिभिर्लीलाभिरित्यर्थः। अत्राखिलेति। प्रतिकूलं प्रत्याख्यायकम्। उदासीनं त्याजकमित्यर्थः। [अङ्कयुग्मं स्कन्धाध्याययोर्ज्ञापकम्[1]]। श्रीसूतः श्रीशौनकं प्रति निर्धारयतीत्यवतारिकावाक्येन सम्बन्धः। एवमुत्तरत्र सर्वत्र बोध्यम् ॥२९॥

तादृशमेव तात्पर्यं करिष्यमाणतद्ग्रन्थप्रतिपाद्यतत्त्वनिर्णयकृते तत्प्रवक्तृश्रीबादरायणकृते समाधावपि संक्षेपत एव निर्धारयति—

"भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम्[2] ॥

---

1 Most probably it is a reader's note for the indication of the reference of the śloka स्वसुख etc. An extensive note of some reader is met with at the end of the commentary of śl. 1 (P. 3).

2 SR reads तदुपाश्रयाम् and glosses as "ईश्वराश्रयां तदधीनां मायाम्". RG reads तदपाश्रयाम् and interprets तद्बहिर्भूताम्. Śrikṛṣṇa has three powers (शक्ति)—essential (अन्तरङ्गा), unessential (बहिरङ्गा) and indifferent (तटस्था). Essential

यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतञ्चाभिपद्यते ॥[1]

---

power is of three sorts—existing (सत्), illumining (चित्) and gladdening (आनन्द). These three have other appellations as सन्धिनी, संवित् and ह्लादिनी respectively. Māyā or Āvidyā is known as the unessential power (बहिरङ्गा शक्ति) of Śrikṛṣṇa and jiva, the indifferent power i.e. तटस्था शक्ति. cf. 'ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥' इति विष्णुपुराणात् । सर्वसंश्रयत्वं च तस्य 'अस्य (?एतस्य वा अक्षरस्य) प्रशासने गार्गि सूर्याचन्द्रमसौ विधृते (?विधृतौ) तिष्ठतः' (बृ० उ० ३।८।२) इत्यादिश्रुत्या—RG.

CC explains these powers as—

संक्षेपे कहिल एइ कृष्णेर स्वरूप ।
एबे संक्षेपे कहि शुन राधातत्त्वरूप ॥
कृष्णेर अनन्त शक्ति ताते तिन प्रधान ।
चिच्छक्ति मायाशक्ति जीवशक्ति नाम ॥
अन्तरङ्गा बहिरङ्गा तटस्था कहि यारे ।
अन्तरङ्गा स्वरूपशक्ति सबार उपरे ॥
सत् चित् आनन्दमय कृष्णेर स्वरूप ।
अतएव स्वरूपशक्ति हय तिन रूप ॥
आनन्दांशे ह्लादिनी सदंशे सन्धिनी ।
चिदंशे संविद् यारे ज्ञान करि मानि ॥

(चै० च० २।८)

1 The construction will be—यया सम्मोहितः ( सन् ) जीवः परोऽपि आत्मानं त्रिगुणात्मकं मनुते, तत्कृतमनर्थं चाभिपद्यते ।

अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे[1] ।
लोकस्या[2]जानतो व्यासश्चक्रे सात्वतसंहिताम्[3] ॥
यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥[4]
स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिम्[5] ॥
(भा० १।७।४-८)

---

1 अधोक्षज is one of the names of Viṣṇu. cf. वनमाली बलिध्वंसी कंसारातिरधोक्षजः—अमरकोष. Kṣīrasvāmin comments as—अधः कृत्वाक्षाणीन्द्रियाणि जातोऽधोक्षजः, अधोक्षाणां जितेन्द्रियाणां वा जायते प्रत्यक्षीभवति, अक्षजं ज्ञानमधोऽस्य वा.

2 An elliptical word as अर्थे should be supplied here. Vyāsa wrote the BH (सात्वतसंहिता) for the people (लोकस्य [अर्थे]) who did not know (अजानतः) that through Bhaktiyoga all evils are averted.

3 SR attaches much importance to these three ślokas. (1.7.4-6) The import of the BH has been delineated in brief in these three ślokas. "तदनेन श्लोकत्रयेण श्रीभागवतार्थः संक्षेपेण दर्शितः । एतदुक्तं भवति—विद्याशक्त्या मायानियन्ता नित्याविर्भूतपरमानन्दस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरः, तन्मायया सम्मोहितस्तिरोभूतस्वरूपस्तद्विपरीतधर्मा जीवः, तस्य चेश्वरस्य भक्त्या लब्धज्ञानेन मोक्ष इति । तदुक्तं विष्णुस्वामिना—ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः । स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः ॥ तथा—स ईशो यद्वशे माया स जीवो यस्तयार्दितः । स्वाविर्भूतपरानन्दः स्वाविर्भूतसुदुःखभूः । स्वादृगुत्थविपर्यासभवभेदजभीशुचः । यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः ॥"——SR under BH 1.7.6.

4 B and C read मलापहा.

5 BH (Gītā Press) reads मुनिः. In the next śloka (BH 1.7.9) the words निवृत्तिनिरत and मुनि refer to Śukadeva and no variant reading is found. So here also these words should in all probability be used with reference to Śukadeva.

तत्र—

स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ।
कस्य[1] वा वृहतीमेतामात्मारामः समभ्यसत् ॥[3]
(भा० १।७।६)

इति शौनकप्रश्नानन्तरञ्च—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥[4]
हरेर्गुणाक्षिप्तमतिर्भगवान्[5] बादरायणिः ।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥[6]
(भा० १।७।१०–११)

---

1 "कस्य वा हेतोः"—SR, "कस्येति हेतोरिति शेषः"—RG, "संहिताभ्यासस्य किं फलमित्यर्थः"—BD.

2 v.l. महतीम्—B & C.

3 Śaunaka poses a pertinent question that Śuka being a total renouncer should not have read this heavy tome as BH.

4 We come to know from Vaiṣṇava biographers that Śrīcaitanya, in his polemics with Sārvabhauma Bhaṭṭācārya, interpreted this śloka in eighteen different ways and Sārvabhauma had earlier shown nine other interpretations. Sārvabhauma felt defeated by Śrīcaitanya and identified him with Śrīkṛṣṇa. cf. CC 2.6 ; Caitanya Bhāg. narrates this with a little change (3.3).

5 The epithet Bhagavān used with reference to the son of Bādarāyaṇa is explained in the following manner—

उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

6 The answer to the question of Śaunaka is being given by Śrīsūta in these two ślokas. Sages bereft of all bonds possess unconditional devotion for Harī. Śukadeva being

भक्तियोगेन प्रेम्णा ।

अस्त्वेवमङ्ग भजतां भगवा[1]न्मुकुन्दो ।
मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्[2] ॥"
(भा० ५।६।१८)

इत्यत्र प्रसिद्धेः । प्रणिहिते समाहिते, "समाधिनानुस्मर तद्विचेष्टितम्" (भा० १।५।१३) इति तं प्रति श्रीनारदोपदेशात् । पूर्णपदस्य मुक्तप्रग्रहया[3] वृत्त्या—

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
वर्त्तते निरुपाधिश्च वासुदेवेऽखिलात्मनि ॥" इति पाद्मोत्तरखण्डवचनावष्टम्भेन, तथा—

---

endowed with such devotion practised the BH and instructed in it with a view to having close association with the Vaiṣṇavas, who are extremely dear to him. "ननु भक्तिं कुर्वन्तु नाम, एतच्छास्त्राभ्यासे शुकस्य किं कारणमित्यत आह—हरेरिति ।....विष्णुजनाः प्रिया यस्येति । व्याख्यानादिप्रसङ्गेन तत्सङ्गतिकाम इति भावः । एतेन तस्य पुत्रो महायोगीत्यादिना ( भा० १।४।४ ) शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत् पृष्टं तस्योत्तरमुक्तम् ।"—SR under BH 1.7.11.

1 Most of the editions of BH read भगवान् भजतां.

2 JG seeks to establish with the help of this quotation from BH that *bhaktiyoga* means *preman.* By *bhajana* one attains from *Bhagavān* only *mukti*, but not *bhaktiyoga.* This means that *bhaktiyoga* is something else than *bhajana*; it is *preman.* SR supports this by interpreting as "सप्रेमभक्तियोगम्".

3 There are some words as सर्वं, पूर्णं etc. which may be understood in relative and absolute acceptations. In the expression "All are going to the Zoo" the word 'all' is relative and means 'all present here'. Again in "All will meet death" 'all' is absolute and excludes none. In this second acceptation, the word 'all' is to be apprehended in an unrestricted sense (मुक्तप्रग्रहा वृत्ति). Similarly, the word पूर्ण

"कामकामो यजेत् सोममकामः पुरुषं परम् ।।
अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ।।" (भा० २।३।९-१०)

इत्यस्य वाक्यद्वयस्य पूर्ववाक्ये 'पुरुषं परमात्मानं प्रकृत्येकोपाधिम्', उत्तरवाक्ये 'पुरुषं पूर्णं निरुपाधिम्' इति टीकानुसारेण[1] च पूर्णः पुरुषोऽत्र स्वयंभगवानेवोच्यते ।।३०।।

श्रीबलदेवविद्याभूषणकृता टीका ।

ग्रन्थवक्तुः शुकस्य यत्र निष्ठावधारिता[2], तत्रैव ग्रन्थकर्तुर्व्यासस्यापि निष्ठामवधारयितुमवतारयति—तादृशमेवेति । निवृत्तिनिरतं ब्रह्मानन्दादन्यस्मिन् स्पृहाविरहितम् । कस्येति—संहिताभ्यासस्य किं फलमित्यर्थः । अध्यगादधीतवान् । मुक्तप्रग्रहयेति—यथाश्वः प्रग्रहे मुक्ते बलावधि धावत्येवं पूर्णशब्दः प्रवृत्तः पूर्णत्वावधि प्रवर्त्तेतेति वक्तुं तदवधिश्च स्वयंभगवत्येवेति तथोच्यत इत्यर्थः ।।३०।।

पूर्वमिति पाठे[3] 'पूर्वमेवाहमिहासम्' 'इति तत्पुरुषस्य

---

(full) in its unrestricted full-stretched sense will signify only Bhagavān Śrikṛṣṇa. This is being substantiated with the help of the following śloka quoted in TS from the Padmapurāṇa. The next quotations from BH and its commentary by SR seek to prove that only Bhagavān Vāsudeva may be attributed with the word पूर्णं. cf. यथाश्वः प्रग्रहे मुक्ते बलावधि धावत्येवं पूर्णशब्दः प्रवृत्तः पूर्णत्वावधि प्रवर्त्तेतेति वक्तुम्, तदवधिश्च स्वयंभगवत्येवेति तथोच्यत इत्यर्थः"—BD.

1 These are not the exact quotations from the commentary of SR. cf. "पुरुषं परं प्रकृतिव्यतिरेकोपाधिमीश्वरम्....पुरुषं पूर्णं परं निरुपाधिम् ।" (SR under BH 2.3.9 & 10).

2 See Para 29 (P. 63).

3 There is a variant reading in the śloka भक्तियोगेन etc. (BH 1.7.4.)—for पुरुषं पूर्णम् some read पुरुषं पूर्वम्. That is being explained here by JG.

पुरुषत्वम्' इति श्रौतनिर्वचनविशेषपुरस्कारेण च स एवोच्यते[1]। तम् 'अपश्यत्' श्रीवेदव्यास इति स्वरूपशक्तिमन्तमेवेत्येतत्[2] स्वयमेव लब्धम्, [3]पूर्णं चन्द्रमपश्यदित्युक्ते कान्तिमन्तमपश्यदिति लभ्यते[4]। अतएव—

---

1 As the expression पुरुषं पूर्णम् is used with reference to श्रीकृष्ण, so also पुरुषं पूर्वम् will signify that Supreme Being and none else. In fact पूर्व and पुरुष are etymologically cognate words. पुरा (पूर्वम्) आसीदिति पुरुषः. Śrikṛṣṇa is called पुरुष for His existence prior to the creation i.e. even after the dissolution of the universe. RG shows another derivation of पुरुष as पुरि शेते i.e. He who lies in or pervades every body (पुर्) is पुरुष. This latter derivation is corroborated by Śruti—परात् परं पुरिशयं पुरुषमीक्षते (प्रश्न० उ० ५।५), अयं पुरुषः सर्वासु पूर्षु पुरिशयः (बृ० उ० २।५।१८). The former derivation may be supported by आत्मैवेदमग्र आसीत् पुरुषविधः (बृ० उ० १।४।१), ब्रह्म वा इदमग्र आसीत् (बृ० उ० १।४।१०) etc. RG is sufficiently lucid in the exposition of this proposition. cf. "तत् पूर्वमेवाहमिहासमिति श्रुतिप्रतीतिकस्य पूर्वं सृष्टेः पूर्वं प्रलयेऽहमेवासमित्यर्थः। तत् सृष्टिपूर्वकालसत्त्वं पुरुषत्वं पुरुषपदप्रवृत्तिनिमित्तं पुरुषसम्बन्धीत्यपरश्रुतिप्रतीतिकार्थः। तथा च सृष्टिप्राक्कालसत्तावद्रूपावच्छिन्नः स्वयंभगवानेव पुरुषपदमुख्यार्थः, तत्रैव पुरि शरीरे शेत इति, पुरा आसीदिति व्युत्पत्तिद्वयसिद्धपुरुषपदप्रवृत्तिसत्त्वादिति ॥"—RG.

2 v.l. मित्येतत्—B,C.

3 v.l. अतएव पूर्णं etc. The use of 'अतएव' in such a quick sequence is not idiomatic. (cf. अतएव स्वभावः etc., अतएव मायां च etc. in the following sentences.) So here 'अतएव' is most probably a reader's note.

4 Anything referred to must be considered as being endowed with its natural power. The emaciated moon is found divested of its natural power but the full moon shines

त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य[1] चिच्छक्त्या[2] कैवल्ये स्थित आत्मनि ॥
(भा० १।७।२३)

इत्युक्तम् । अतएव 'मायाञ्च तदपाश्रयाम्' इत्यनेन तस्मिन् अप अपकृष्ट आश्रयो यस्याः, निलीय स्थितत्वादिति मायाया न तत्स्वरूपभूतत्वमित्यपि लभ्यते । वक्ष्यते च—'माया परैत्यभिमुखे च विलज्जमाना'[3] (भा० २।७।४७) इति । स्वरूपशक्तिरियमत्रैव व्यक्तीभविष्यति—'अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे' (१।७।६) इत्यनेन "आत्मारामाश्च" (भा० १।७।१०) इत्यनेन च । पूर्वत्र (भा० १।७।६) हि भक्तियोगप्रभावः खल्वसौ मायाभिभावकतया स्वरूपशक्तिवृत्तित्वेनैव गम्यते[4], परत्र (भा० १।७।१०) च ते गुणा

---

with its full glory and natural power. So with the visualisation of पूर्ण पुरुष, the natural power (स्वरूपशक्ति) of पुरुष is automatically visualised. This is also proved by the immediately following testimony of BH (1.7.23) quoted by JG.

1 "व्युदस्याभिभूय"—SR.

2 Māyā is the unessential power of Bhagavān. So it is overwhelmed by the natural and essential power ( चिच्छक्ति ).

3 "मायाऽभिमुखे स्थातुं विलज्जमानेव यस्मात् परैति दूरतोऽपसरतीति ।" —SR.

4 By the influence of *bhaktiyoga* all evil is alleviated, *māyā* is overcome. *Bhakti* is the essence of the natural powers of *Bhagavān*.

ब्रह्मानन्दस्याप्युपरिचरतया[1] स्वरूपशक्तेः परमवृत्तितामेवार्हन्तीति ।[2] मायाधिष्ठातृपुरुषस्तु तदंशत्वेन, ब्रह्म च तदीयनिर्विशेषाविर्भावत्वेन[3], तदन्तर्भावविवक्षया पृथङ् नोक्ते[4] इति ज्ञेयम्[5] । अतोऽत्र पूर्ववदेव सम्बन्धितत्त्वं निर्धारितम् ॥३१॥

श्रीबलदेवविद्याभूषणकृता टीका ।

पाठान्तरेणापि स एवार्थं इति व्याख्यातुमाह—पूर्वमिति । ईश्वरस्यैव पूर्ववर्तित्वात् पुरुषत्वमित्यर्थः । स एवेति स्वयंभगवानेव । स्वरूपशक्तिमत्त्वे प्रमाणमाह—त्वमिति । श्रुतिश्चात्रास्ति । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति (श्वे० उ० ६।८)। एवैव "ह्लादिनी सन्धिनी" इत्यादिना स्मर्यते । इत्युक्तमिति कण्ठतः पाठितमर्जुनेनेत्यर्थः । मायातोऽन्येयं बोध्येत्याह—अतएवेत्यादिना । मूलवाक्येन स्वरूपभूता चिच्छक्तिरियं बोधितास्तीत्याह—स्वरूपेत्यादिना । पट्टमहिषीव स्वरूपशक्तिः, बहिर्द्वारसेविकेव मायाशक्तिरित्युभयोर्महदन्तरं बोध्यम् । भगवद्भक्तेर्भगवद्गुणानाञ्च स्वरूपशक्तिसारांशत्वं सयुक्तिकमाह—पूर्वत्र हीत्यादिना । ब्रह्मानन्दस्येति—अनभिव्यक्तसंस्थानादिविशेषस्येति बोध्यम् । ननु परमात्मरूपस्तादृशब्रह्मरूपश्चाविर्भावः कुतो व्यासेन न दृष्ट इति चेत्तत्राह—मायाधिष्ठात्रिति ॥३१॥

---

1 'उपरिचरतया तदधिकसुखविषयतया'—RG. For उपरिचरतया there is a variant reading as उपरिवर्तितया.

2 The qualities of Bhagavān, like the *bhaktiyoga*, constitute the essence of the natural powers of *Bhagavān*. "भगवद्भक्तेर्भगवद्गुणानां च स्वरूपशक्तिसारांशत्वं सयुक्तिकमाह—पूर्वत्र हीत्यादिना ।"—BD. "परमवृत्तितां सारांशवृत्तिताम्"—RG.

3 v.l. निर्विशेषाविर्भावरूपत्वेन—RG.

4 RG reads—तदन्तर्भावेणापृथग्दृष्टत्वात् पृथग् नोक्ते.

5 *Paramātman*, the wielder and presiding deity of *māya*, is included in *Bhagavān* for His being a portion of *Bhagavān*. Similarly, *Brahman* being an attributeless manifestation of *Bhagavān* becomes included in Him (*Bhagavān*) and requires no special mention.

अथ प्राक्प्रतिपादितस्यैवाभिधेयस्य प्रयोजनस्य च स्थापकं जीवस्य स्वरूपत एव परमेश्वराद्वैलक्षण्य[1]मपश्यदित्याह—

---

1 The Advaitins propound complete identity of *jiva* and *Parameśvara*. The difference between these two, as perceived during the period of bondage (बन्ध), is, according to the Advaitins, unreal. To this the Vaiṣṇavas maintain that both in bondage and salvation (मोक्ष) the difference is real. During bondage the difference is foolproof. In salvation also the difference may be established on the authority of *Śruti*. In Muṇḍaka (3. 1. 3) it is said that the enlightened person attains close similarity (परमं साम्यम्), and not identity, with *Parameśvara*. So also is said in Kaṭha (2. 1. 15)—The enlightened self becomes similar to *Bhagavat* (तादृगेव भवति). The expressions of Śruti which apparently seek to propound the identity of the two are to be understood in a secondary sense. According to the Vaiṣṇavas the expressions एकमेवाद्वितीयम्, नेह नानास्ति किञ्चन, तत्त्वमसि etc. establish that *jiva*, the individual self, and *jagat*, this universe, are in their existence dependent on *Brahman*; but these expressions cannot prove the identity. The organs of speech etc. being dependent upon *prāṇa* is often called *prāṇa*, but this does not establish the identity of the organ of speech with *prāṇa*.

cf. एवं मोक्षेऽपि भेदोक्तेः स्याद्भेदः पारमार्थिकः ।
ब्रह्माहमेको जीवोऽस्मि नान्ये जीवा न चेश्वरः ॥

(प्रमेयरत्नावली, ४।२)

and प्राणैकाधीनवृत्तित्वाद् वागादेः प्राणता यथा ।
तथा ब्रह्माधीनवृत्तेर्जगतो ब्रह्मतोच्यते ॥ (ibid 4.5)

ययेति[1]। यया मायया सम्मोहितो जीवः स्वयं चिद्रूपत्वेन त्रिगुणात्मकाज्जडात् परोऽप्यात्मानं त्रिगुणात्मकं जडं देहादिसंघातं मनुते, तन्मननकृतमनर्थं संसारव्यसनञ्चाभिपद्यते। तदेवं जीवस्य चिद्रूपत्वेऽपि, "यया सम्मोहितः" इति "मनुते" इति च स्वरूपभूतज्ञानशालित्वं व्यनक्ति, प्रकाशैकरूपस्य तेजसः स्वपरप्रकाशनशक्तिवत्।[2] "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति

---

BD in his commentary of TS shows the points of difference between these two as—सेवकत्वसेव्यत्वाणुत्वविभुत्वरूपनित्यधर्महेतुकं भेदमित्यर्थः.

1 Here JG is explaining the śloka of BH (1. 7. 5) referred to in Para 30.

2 That knowledge (*jñāna*) is the nature of *jiva* is admitted by the Vaiṣṇavas along with the Advaitins but they further admit that *jñāna* is also the attribute of *jiva*. Thus according to the Vaiṣṇavas *jiva* is both knowledge and knower. In BH (1. 7. 5) a mention of the delusion (मोह—यया सम्मोहितः etc.) of *jiva* proves the existence of jiva even when the knowledge, the attribute, is absent. Again the explicit reference as मनुते (knows) proves up to the hilt the status of *jiva* as knower. So it follows that *jiva* possesses knowledge which is also his nature (स्वरूपभूतज्ञानशालित्वम्). For instance, the sun possesses lucency (प्रकाश) which is its nature (स्वरूपभूतप्रकाशशालित्वम्). This contention is further substantiated by a quotation from the Gitā—अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः. Here also *jiva* is said to be under delusion (मोह). *Jiva* is referred to in Praśna U. (4. 9) as knower—एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः.

जन्तवः" ( गीता ५।१५ ) इति श्रीगीताभ्यः। तदेवं 'उपाधेरेव जीवत्वं, तन्नाशस्यैव मोक्षत्वम्' इति मतान्तरं परिहृतवान्[1]। अत्र 'यया सम्मोहितः' इत्यनेन तस्या[2] एव तत्र कर्तृत्वं, भगवतस्तत्रोदासीनत्वं मतम् वक्ष्यते च[3]—

विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया[4]।
विमोहिता विकत्थन्ते[5] ममाहमिति दुर्धियः॥

(भा० २।५।१३)

इति।

---

1 All afflictions come only when there is the perception of egoism ( अहंकार ). In sound sleep ( सुषुप्ति ) there is no egoism and afflictions also disappear. Thus it is concluded by the Advaitins that the annihilation of *aham*, rather of the source of *aham* i.e. of mind ( अन्तःकरण ), is the only way out for shunning this inevitable sorrow. Consciousness determined by mind constitutes *jīva* (अन्तःकरणोपहितं चैतन्यं जीवः) and annihilation of the determinant ( उपाधि ) will bring about an unlimited undetermined consciousness (निरवच्छिन्नं चैतन्यम्) i.e. *mokṣa*.

As propounded earlier (in P. 75, f.n. 2) *jīva* being both conscious and consciousness, the said argument of the Advaitins falls through since they regard *jīva* as consciousness alone.

2 Here *māya* is referred to by 'तत्'.

3 "वक्ष्यति चेति—मायाया एव मोहकत्वं न तु भगवत इति शेषः"—RG.

4 RG shows the construction as—"यस्य भगवत ईक्षापथे स्थातुं विलज्जमानया अमुया मायया विमोहिता जीवा विकत्थन्त इति।"

5 SR glosses—"विकत्थन्ते श्लाघन्ते।" कत्थ श्लाघायाम् ( भ्वादि ३८, कत्थते )

अत्र 'विलज्जमानया'[1] इत्यनेनेदमायाति—तस्या जीवसम्मोहनं कर्म श्रीभगवते न रोचत इति यद्यपि सा स्वयं जानाति, तथापि "भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य" (भा० ११।२।३७) इति दिशा जीवानामनादिभगवदज्ञानमयवैमुख्यम्[2]सहमाना स्वरूपावरण-मस्वरूपावेशञ्च[3] करोति ।।३२।।

श्रीबलदेवविद्याभूषणकृता टीका ।

जीवो येनेश्वरं भजेत् भक्त्या च तस्मिन् प्रेमाणं विन्देत्ततो मायया विमुक्तः स्यात्तमीश्वराज्जीवस्य वास्तवं भेदमपश्यदिति व्याचष्टे—अथ प्रागित्यादिना । जीवस्येति वैलक्षण्यमिति—सेवकत्वसेव्यत्वाणुत्वविभुत्वरूपनित्यधर्महेतुकं

---

1 "लज्जा च भगवत् सङ्गिचिच्छक्तिमपेक्ष्य निकृष्टत्वेन, तथा च भगवदनुमतिं विनैव जीवसम्मोहः क्रियत इति भावः ।"—RG.

2 There are by nature two types of people (jivas)—one, having inclination and another, disinclination for *Bhagavān*. The former group is aware of Bhagavān and the latter is ignorant. Māyā cannot tolerate this apathy of the latter and casts her influence on them i.e. veils these conscious jivas just as darkness veils the luminous candle which has been covered by a jar. cf. "ईशवैमुख्येन पिहितं जीवं माया पिधत्ते, घटेनावृतं दीपं यथा तम आवृणोतीति ।"—BD.

3 Māyā or Ajñāna has two functions—concealment ( आवरण) and distortion (विक्षेप ). Here JG uses two terms as स्वरूपावरण and अस्वरूपावेश respectively. In BH they are referred to as अस्मृति and विपर्यय. cf. भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः (BH. 11. 2. 37). This is explained by SR as—"ईशादपेतस्येति । ईशविमुखस्य तन्माययाऽस्मृतिर्भगवतः स्वरूपा-स्फूर्तिस्ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभिनिवेशाद् भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु ।"

भेदमित्यर्थः। ननु चिन्मात्रो जीवः 'यो विज्ञाने तिष्ठन्' (बृ० उ० ३।७।२२) 'विज्ञानं यज्ञं तनुते' (तै० उ० २।५।१) इत्यादौ चिद्धातुत्वश्रवणात्, न तस्य धर्मभूतं नित्यं ज्ञानमस्ति येन मोहमनने वर्णनीये ? तस्मात् "सत्त्वात् सञ्जायते ज्ञानम्" (गीता १४।१७) इत्यादिवाक्यात् सत्त्वे या चैतन्यस्य[1] च्छाया, तदेव सत्त्वोपहितस्य तस्य ज्ञानं येन मोह-मनने व्यासेन दृष्टे स्यातामिति चेत्तत्राह तदेवमित्यादिना। छायाभावाच्च न तत्कल्पनं युक्तमिति भावः। ननु स्वरूपभूतं ज्ञानं कथमिति चेत्तत्राह—प्रकाशैकेति। अहिकुण्डलाधिकरणे भाषितमेतद्द्रष्टव्यम्[2]। तृतीयसन्दर्भे विस्तरीष्याम एतत्। तदेवमुपाधेरिति—'अन्तःकरणं जीवः'[3] अन्तःकरणनाशो जीवस्य मोक्ष इति शाङ्करमतं दूषितम्। तथा सति परोऽपीत्यादिव्याकोपादिति भावः। अत्रेति—तत्र जीवमोहने कर्मणि। तस्या मायायाः। विलज्जेति ब्रह्मवाक्यम्[4]। अमुया—मायया। असहमानेति—दास्या उचितमेतत् कर्म यत् स्वामिविमुखान् दुःखाकरोतीति। ईशवैमुख्येन पिहितं जीवं माया पिधत्ते, घटेनावृतं दीपं यथा तम आवृणोतीति ॥३२॥

---

1 v. l. चेतनस्य—B & C.

2 BD comments on the Brahmasūtra "उभयव्यपदेशात्त्वहिकुण्डलवत्," (3. 2. 28) as follows—"ज्ञानानन्दस्वरूपस्य ब्रह्मणो ज्ञानानन्दौ धर्मत्वेन मन्तव्यावहिकुण्डलवत्। कुण्डलात्मनोऽप्यहेर्यथा कुण्डलं विशेषणत्वेन मन्यते तद्वत्। कुत एतत्तत्राह—उभयेति। उक्तश्रुतिषूभयाभिधानादित्यर्थः।......"

The next sūtra प्रकाशाश्रयवद्वा तेजस्त्वात्, (3. 2. 29) is commented upon as—"ब्रह्मणस्तेजस्त्वाच्चैतन्यस्वरूपत्वात्, प्रकाशाश्रयवद्वा तस्य निर्णयः स्यात्। प्रकाशात्मा रविर्यथा प्रकाशाश्रयो भवत्येवं ज्ञानात्मा हरिर्ज्ञानाश्रय इत्यर्थः। अविद्याविरोधि तिमिरविरोधि च यत्तु तेजः कथ्यते।"

3 Most probably the original reading was—अन्तःकरणोपहितं चैतन्यं जीवः. The reading as stands now is never admitted by by Śaṅkara or his followers.

4 This is said by Brahmā to Nārada.

श्रीभगवांश्चानादित एव भक्तायां प्रपञ्चाधिकारिण्यां तस्यां दाक्षिण्यं लङ्घितुं न शक्नोति ।[1] तथा तद्भयेनापि[2] जीवानां स्वसाम्मुख्यं वाञ्छन्नुपदिशति[3] —

देवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
( गीता ७।१४ )

---

1 Māyā, a devotee of Bhagavān, has been entrusted with the task of creating this world. This creation was designed by Bhagavān in order to offer facilities for the *jīvas* to win the four results viz. *dharma, artha, kāma* and *mokṣa* (cf. BH 10. 87. 2). Although Māyā was not asked to veil the *jīvas*, she has been faithfully and sincerely prosecuting her pursuit of casting a veil on the *jīvas*, who remain eternally averse to Bhagavān. This sincerity and love for Bhagavān cannot be ignored and consequently Bhagavān cannot withdraw His favour for Māyā.

2 The word तद्भयेन should be expounded as तस्याः (५मी) मायाया मायातो भयम्, तेन. In the existing constuction Bhagavān seems to be afraid of Māyā. In order to allay this misunderstanding BD explains मायातो यज्जीवानां भयं तेनापि हेतुनेत्यर्थः. Thus the word जीवानां is to be construed with the preceding word and also with the following one (स्वसाम्मुख्यम्). This is known as काकाक्षि (गोलक)न्याय. (cf. न वेति विभाषा—Pāṇ. Sū. 1. 1. 44. "इतिशब्दः काकाक्षिन्यायेनोभयत्र संबध्यते"—तत्त्वबोधिनी)

3 The veil which has been cast by Māyā over the *jīvas* must be rent asunder. Bhagavān instructs the *jīvas* in the way of dissipation of this veil. Utter resignation to Bhagavān is the only resort for crossing over the veil of Māyā.

'सतां प्रसङ्गान्मम वीर्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ।।
( भा० ३।२५।२५ ) इति ।[1]

लीलया[2] श्रीमद्व्यासरूपेण तु विशिष्टतया तदुपदिष्टवानि[3]त्यनन्तरमेवायास्यति, अनर्थोपशमं साक्षादिति । तस्माद्द्वयोरपि[4] तत्तत्[5] समञ्जसं ज्ञेयम् ।

---

1 In this śloka Bhagavān praises the company ( प्रसङ्ग ) of the good because they discuss the valour of Bhagavān. He further says that these talks please the ears and the hearts of the listeners. Gradually through an attraction for the path of salvation ( अपवर्गवर्त्म ) these talks lead them to *śraddhā*, *rati* and finally to *bhakti*. cf. "सत्सङ्गस्य भगवत्यङ्गतामुपपादयति सतामिति । वीर्यस्य सम्यग्वेदनं यासु ता वीर्यसंविदः, हृत्कर्णयोः रसायनाः सुखदाः । तासां जोषणात् सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन् हरौ प्रथमं श्रद्धा, ततो रतिः, ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ।"—SR.

2 "लीलयेति लीलावतारेण"—BD.

3 The word श्रीभगवान् (beginning of this para) is the nominative of उपदिष्टवान्.

4 RG reads द्वयोरेव.

5 "मोहनं साम्मुख्यवाञ्छा चेत्यर्थः——BD. Bhagavān does not interfere in Māyā's act of veiling ( मोहन ) but at the same time He saves the *jīvas* from the spell by advising them to be inclined to Him (Bhagavān).

ननु माया खलु शक्तिः, शक्तिश्च कार्यक्षमत्वं, तच्च धर्मविशेषः, तस्याः कथं लज्जादिकम् ? उच्यते—एवं सत्यपि भगवति[1] तासां शक्तीनामधिष्ठातृदेव्यः श्रूयन्ते, यथा केनोपनिषदि महेन्द्र-माययोः संवादः ।[2] तदास्ताम्, प्रस्तुतं प्रस्तूयते ॥३३॥

श्रीबलदेवविद्याभूषणकृता टीका ।

नन्वीश्वरः कथं तन्मोहनं सहते ? तत्राह—भगवांश्चेति । तर्हि कृपालु-ताक्षतिः ? तत्राह—तथेति । तद्द्वयेनापीति—मायातो यज्जीवानां भयं तेनापि हेतुनेत्यर्थः । ततश्च न तत् क्षतिरित्यर्थः । दैवीति—प्रपत्तिश्चेयं सत् प्रसङ्गहेतुकैव तदुपदिष्टा यया साम्मुख्यं स्यात् "तद्विद्धि प्रणिपातेन" (गीता ४।३४) इत्यादि तद्वाक्यात्, "सतां प्रसङ्गात्" इत्याद्यग्रिमवाक्याच्च । लीलयेति—लीलावतारेण । विशिष्टतयेति—आचार्यरूपेणेत्यर्थः । तस्मादिति—द्वयोर्मायाभगवतोरपि । तत्तदिति—मोहनं साम्मुख्यवाञ्छा चेत्यर्थः । ननु मायाया मोहनलज्जनकर्तृत्वमुक्तं तत् कथं जडायास्तस्याः सम्भवेदिति शङ्कते—ननु मायेति । धर्मविशेष उत्साहादिवदित्यर्थः । सिद्धान्तयति—उच्यत इति । अधिष्ठातृदेव्य इति । विन्ध्यादिगिरीणां यथाधिष्ठातृमूर्तयस्तद्वत् । केनेति—यस्यां "ब्रह्म ह देवेभ्यो विजिग्ये" (के० उ० ३।१) इत्यादिवाक्य-मस्ति । तत्राग्निवायुमघोनः सगर्वान् वीक्ष्य तद्गर्वमपनेतुं परमात्मा-विरभूत् । तमजानन्तस्ते जिज्ञासयामासुः । तेषां वीर्यं परीक्षमाणः स तृणं

---

1 "भगवतीत्याधारे सप्तमी, तथा च भगवन्निष्ठानां तासां शक्ती-नामित्यर्थः ।"—RG.

2 JG poses a problem—How is it that *Māyā* being an attribute possesses the faculties as bashfulness ? To this it is urged that although *Māyā* is an attribute, there are the accredited presiding deities of these attributes and these faculties may very well belong to those deities. An instance is cited from the Kenopaniṣad where Indra and *Māyā* (*Umā*) converse with each other. Had there been no presiding deity of *Māyā*, no discussion could have taken place with *Māyā*, an attribute. cf. "मायाया अधिष्ठातृदेव्यभावे तया महेन्द्रस्य मिथः कथनरूपसंवादासम्भव इति भावः ।"—RG.

निदधौ । सर्वं दहेयमित्यग्निः, सर्वमाददीयेति वायुश्च ब्रुवंस्तन्निदंग्धुमादर्तुञ्च नाशक्त् । ज्ञातुं प्रवृत्तान्मघोनस्तु स तिरोऽधत्त । तदाकाशे मघवा हैमवतीमुमामाजगाम, किमेतदिति पप्रच्छ । सा च ब्रह्मैतदित्युवाचेति निष्कृष्टम् ॥३३॥

तत्र जीवस्य तादृश[1]चिद्रूपत्वेऽपि परमेश्वरतो वैलक्षण्यं[2] तदपाश्रयामिति, यया सम्मोहित इति च दर्शयति[3] ॥३४॥

---

1 It has been propounded earlier (in P. 75) that *jīva* possesses knowledge which is its nature (स्वरूपभूतज्ञानशाली).

2 The difference of *jīva* from *Parameśvara* has already been indicated (in P. 74). Now this is being expressly mentioned and substantiated with the help of the two expressions—मायाञ्च तदपाश्रयाम् (BH. 1. 7. 4) and यया सम्मोहितो जीवः (BH 1. 7. 5)—of which the first signifies that *Māyā* remains far away from *Parameśvara* who is not at all dependent on *Māyā*. The second expression unequivocally propounds *jīva*'s dependence on *Māyā*. Of course there are other differences which have been referred to by BD in P. 77-78.

In spite of the fact that both *jīva* and *Parameśvara* are embodied entities, there is certainly a clear line of demarcation between these two. SR, in his commentary of BH, demonstrates that *jīva*, being under the veil of *avidyā*, becomes associated with a false body and considers that body to be his own. SR further shows that *Parameśvara*, on the other hand, takes up, by His power viz. *Māyā*, some eternal conscious forms. (cf. जीवस्याविद्यया मिथ्यात्मदेहसम्बन्धः, ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान् विशेषः ।—SR under BH 2.9.4)

3 तदपाश्रयामिति & यया सम्मोहित इति are subjects to this verb and परमेश्वरतो वैलक्षण्यम् is object to it.

श्रीवलदेवविद्याभूषणकृता टीका ।

तत्र जीवस्येति—"मायाञ्च तदपाश्रयाम्" इतीश्वरस्य मायानियन्तृत्वं "यया सम्मोहितो जीवः" इति जीवस्य मायानियम्यत्वञ्च। तेन स्वरूपत ईशाज्जीवस्य भेदपर्य्यायं वैलक्षण्यं दृष्टवानिति प्रस्फुटम् । 'अपश्यत्' इत्यनेन कालोऽप्यानीतः। तदेवमीश्वरजीवमायाकालाख्यानि चत्वारि तत्त्वानि समाधौ श्रीव्यासेन दृष्टानि। तानि नित्यान्येव। "अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः" इत्येवं भाल्लवेयश्रुतेः, "नित्यो नित्यानाञ्चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (कठ उ० २।२।१३) इति काठकात् । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ( श्वे० उ० ४।५ ) इति श्वेताश्वतराणां मन्त्राच्च ।

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ( विष्णुपुराण १।२।१ )
प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥ (विष्णुपुराण १।२।२९)
अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥ (विष्णुपुराण १।२।१९)
अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥ ( विष्णुपुराण १।२।२६ )

इति श्रीवैष्णवाच्च ।[1] तेष्वीश्वरः शक्तिमान् स्वतन्त्रः, जीवादयस्तु तच्छक्तयोऽस्वतन्त्राः ।

---

1 Gauḍiya Vaiṣṇavas admit five realities ( तत्त्व )—*Īśvara*, *jīva*, *prakṛti*, *kāla* and *karman*. The above extract from Viṣṇupurāṇa testifies to the existence of five realities. At the time of the creation of this world *Hari* (*Īśvara*) agitates *pradhāna* (*prakṛti*) and *puruṣa* (*jīva*) by entering into them. Thus the existence of *prakṛti* and *jīva* prior to the creation of the world is established. Kāla (time) is said to be beginningless ( अनादि ) and endless ( नान्तोऽस्य विद्यते ) in the said

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ ( विष्णुपुराण ६।७।६१ )

इति श्रीवैष्णवात्, "स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्च-रेद्भुवि (भा० १०।१।२२) इति श्रीभागवताच्च । तत्र विभुविज्ञानमीश्वरः, अणुविज्ञानं जीवः । उभयं नित्यज्ञानगुणकम् । सत्त्वादिगुणत्रयविशिष्टं जडं द्रव्यं माया । गुणत्रयशून्यं भूतवर्त्तमानादिव्यवहारकारणं जडं द्रव्यं तु कालः । कर्माप्यनादि विनाशि चास्ति, "न कर्माविभागादिति चेन्नानादित्वात्" ( ब्र० सू० २।१।३५ ) इति[1] सूत्रादिति वस्तुस्थितिः श्रुतिस्मृतिसिद्धा वेदितव्या[2] ॥३४॥

---

Purāṇa. *Karman*, as represented by creation etc. ( सर्गस्थित्यन्त-संयमाः ), goes on uninterrupted. Thereby *karman* also is accepted as a reality.

This is to be noted that of these five realities ( तत्त्व ) the first four are eternal—they have neither beginning nor end. But the fifth i.e. *Karman* has end although it is devoid of beginning.

1 That *karman* has no beginning is established by Bādarāyaṇa himself in his Brahmasūtra—न कर्माविभागादिति चेन्नानादित्वात् (2. 1. 35). All the Bhāṣyakāras, including Śaṅkarācārya, had to admit *karman* as an entity without beginning.

2 Although JG has been terse in his observation here, BD has undertaken a fairly lengthy discussion on the realities (तत्त्व). But perhaps being fettered by the restrictions of a commentator he has not been in his form. For clarity we quote here from Brahmasūtrabhāṣya by BD. "तथाहि—ईश्वरजीवप्रकृति-कालकर्माणि पञ्च तत्त्वानि श्रूयन्ते । तेषु विभुचैतन्यमीश्वरोऽणुचैतन्यस्तु जीवः । नित्यज्ञानादिगुणकत्वमस्मदर्थत्वं चोभयत्र । ज्ञानस्यापि ज्ञातृत्वं प्रकाशस्य स्वप्रकाशकत्ववदविरुद्धम् । तत्रेश्वरः स्वतन्त्रः स्वरूपशक्तिमान् प्रवेशनियम-नाभ्यां जगद्विदधत् क्षेत्रज्ञभोगापवर्गौ वितनोति । एकोऽपि बहुभावेना-

यत्रैव यदेकं चिद्रूपं ब्रह्म मायाश्रयतावलितं[1] विद्यामयं तत्रैव तन्मायाविषयतापन्नमविद्यापरिभूतञ्चेत्ययुक्तमिति जीवेश्वरविभागोऽ-

---

भिन्नोऽपि गुणगुणिभावे देहदेहिभावेन च विद्वत्प्रतीतेर्विषयोऽव्ययतोऽपि भवितव्यञ्च एकरसः प्रयच्छति चित् सुखं स्वरूपम् ॥ जीवात्मानस्त्वनेकावस्था बहवः। परेशवैमुख्यात्तेषां बन्धस्तत्साम्मुख्यात् तु तत्स्वरूपतद्-गुणावरणरूपाद्द्विविधबन्धविनिवृत्तिस्तत्स्वरूपादिसाक्षात्कृतिः ॥ प्रकृतिः सत्त्वादिगुणसाम्यावस्था तमोमायादिशब्दवाच्या तदीक्षणावाप्तसामर्थ्या विचित्रजगज्जननी ॥ कालस्तु भूतभविष्यद्वर्तमानयुगपच्चिरक्षिप्रादिव्यवहारहेतुः क्षणादि-परार्धान्तश्चक्रवत् परिवर्तमानः प्रलयसर्गनिमित्तभूतो जडद्रव्यविशेषः ॥ ईश्वरादयश्चत्वारोऽर्था नित्याः। ......जीवादयस्तु तद्वश्याश्च ॥....कर्म च जडमदृष्टादिशब्दव्यपदेश्यमनादि विनाशि च भवति। चतुर्णामेषां ब्रह्मशक्तित्वादेकं शक्तिमद् ब्रह्मेत्यद्वैतवाक्येऽपि सङ्गतिः।" (Br. Sū. Govinda-bhāṣya 1.1.1)

1 "मायाश्रयतेति—मायाश्रयो हि मायामपेक्ष्य व्यापकतया मायाकृतमावरणरूपं तद्विषयत्वं नार्हति, अतो विद्यामयमप्रतिरुद्धज्ञानं तेन देहाभिमानरूपाऽविद्याकृतविषयभोगादिपराभवं च नाप्नोतीति भावः।"—RG.

2. *Brahman* or *Īśvara*, being the locus (*āśraya*) of *Māyā*, is certainly more extensive than *Māyā* and consequently she (*Māyā*) cannot veil Brahman. Again *Īśvara*, who is the wielder of *Māyā* (मायिनं तु महेश्वरम्—श्वे० उ० ४।१०), must remain unveiled i.e. must be of the nature of consciousness ( विद्यामय ). If in this way *Īśvara* being identified with *Brahman* is found *Vidyāmaya*, It cannot at the same time be identified with *jīva*, who is the accredited object of the veiling power of *Māyā* i.e. who is known as *avidyāmaya*. Nowhere in this world is found any magician who is himself veiled by his own magical power. The admission of the identity of both *Īśvara* and *jīva* with Brahman will be tantamount to the position that the magician is veiled by his own magical power which is absurd. On the strength of this argument JG seeks to establish the difference of the two—*Īśvara* and *jīva*.

ऽवगतः । ततश्च स्वरूपसामर्थ्यवैलक्षण्येन[1] तद् द्वितयं मिथो विलक्षणस्वरूपमेवेत्यागतम् ॥३५॥

श्रीबलदेवविद्याभूषणकृता टीका ।

यत्तु 'एकमेवाद्वितीयम्' ( छा० उ० ६।२।१ ) विज्ञानमानन्दं ब्रह्म (बृ० उ० ३।९।२८ ) 'नेह नानास्ति किञ्चन' ( बृ० उ० ४।४।१९ ) इत्यादि-श्रुतिभ्यो निर्विशेषचिन्मात्राद्वैतं ब्रह्म वास्तवम् । अथ सदसद्विलक्षण-त्वादनिर्वचनीयेन विद्याविद्यावृत्तिकेनाज्ञानेन सम्बन्धात्तस्माद् विद्योपहित-मीश्वरचैतन्यमविद्योपहितं जीवचैतन्यञ्चाभूत् । स्वरूपज्ञानेन निवृत्ते त्वज्ञाने न तत्रेश्वरजीवभावः, किन्तु निर्विशेषाद्वितीयचिन्मात्ररूपावस्थितिर्भवेदित्याह मायी शङ्करः । तत्राह यद्येव यदेकमिति विस्फुटार्थम् । इत्युक्तमिति । युगपदेवाकस्मादेवाज्ञानयोगादेकस्य भागस्य विद्याश्रयत्वमन्यस्याविद्यापराभूति-रिति किमपराद्धं तेन ब्रह्मणा येन विविधविक्षेपक्लेशानुभवभाजनताभूत् ? पुनरप्याकस्मिकाज्ञानसम्बन्धस्यापाश्रयत्वाद्वक्तुमिति न तदुक्तरीत्या तद्विभागो वाच्यः, किन्तु श्रीव्यासदृष्टरीत्यैव सोऽस्माभिरवगत इत्यर्थः ॥३५॥

न चोपाधितारतम्यमयपरिच्छेदप्रतिविम्बत्वादिव्यवस्थया[2] तयोर्विभागः स्यात ॥३६॥

---

1 "स्वरूपसामर्थ्यवैलक्षण्येन—स्वरूपयोः स्वाभाविकयोर्मायानियन्तृत्व-प्रयोजकसामर्थ्यमायाकृतावरणनिवर्तनाक्षमसामर्थ्ययोर्वैलक्षण्येन ।"—RG.

2 One single Brahman, without a second, appears as many. This is explained by the Advaitins with the help of the theories of limitation and reflection ( अवच्छेदवाद-प्रतिविम्बवाद ). In spite of the oneness of the sky people experience a difference of the sky delimited by the jar from the one delimited by the house. Again the sky determined by the jar or by the house differs from the unlimited and undetermined sky.

The other theory explaining the appearance of many

श्रीबलदेवविद्याभूषणकृता टीका ।

यत्तु "इन्द्रो मायाभिः पुरुरूप ईयते" (ऋक् सं ६।४७।१८ ; बृ० उ० २।५।१९) इत्यादिश्रुतेस्तस्याद्वितीयस्य ब्रह्मणो मायया परिच्छेदादीश्वर-जीवविभागः स्यात्। तत्र विद्यया परिच्छिन्नो महान् खण्ड ईश्वरः, अविद्यया परिच्छिन्नः कनीयान् खण्डस्तु जीवः[1] । यथा घटेनावच्छिन्नः शरावेणावच्छिन्नश्चाकाशखण्डो महदल्पताव्यपदेशं भजति ।

---

contends that in spite of the oneness of the sun we visualise the reflected sun in a glass of water as different from the original one shining in the sky. Similarly this theory of reflection also explains the seeming difference of the many reflections on many receptacles of water.

Although the Vaiṣṇavas confute these theories with a view to establishing the difference of *Īśvara* from *jīva* i.e. of the worshipped from the worshipper, there are positive testimonial evidences in favour of the admission of such theories. In BH there is a śloka as—न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते । नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ (12. 4. 30) and this has been commented upon by SR in accordance with the theory of limitation ( परिच्छेदवाद ). Similarly the Vedic stanza 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' etc. (quoted by BD and RG) testifies to the theory of reflection ( प्रतिबिम्बवाद ). That is why JG concludes in para. 42 that these theories, if at all to be found anywhere, should be understood only in a secondary sense.

1 Here, as in the previous paragraph, *vidyā* means the unveiled consciousness. Consciousness that wields the veil (*māyā*) and remain unveiled is *Īśvara* and consciousness that is veiled by *māyā* or *avidyā* is *jīva*. *Māyā*, being limited (paricchinna), can veil only a small portion ( कनीयान् खण्डः ) of consciousness and the portion remaining unveiled is certainly bigger (महान् खण्डः ).

'यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपो भित्त्वा बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥'[1]

इत्यादिषु ब्रह्मणस्तस्य प्रतिविम्बश्रवणात्तद्विभागः स्यात् । विद्यायां प्रतिविम्ब ईश्वरः, अविद्यायां प्रतिविम्बस्तु जीवः । यथा सरसि रवेः प्रतिविम्बः, यथा च घटे प्रतिविम्बो महदल्पत्वव्यपदेशं भजते तद्वदित्याह शङ्करः । तदिदं निरसनाय दर्शयति—न चेति । अनया रीत्या तयोर्विभागो न च स्यादित्यन्वयः ॥३६॥

तत्र यद्युपाधेरनाविद्यकत्वेन वास्तवत्वं तर्ह्यविषयस्य तस्य परिच्छेदविषयत्वासम्भवः ।[2] निर्धर्मकस्य व्यापकस्य निरवयवस्य च प्रतिविम्बत्वायोगोऽपि ; उपाधिसम्बन्धाभावात्,

---

1 This śloka has been referred to by RG as śruti.

2 If the determinant ( उपाधि) that determines or delimits the one Consciousness is real, *Brahman* becomes capable of being determined and loses Its very nature of attributelessness. The word *cheda* means the cutting off of one entity into two, three or more portions. The delimitation of *Brahman* into *Īśvara* and *jīva* cannot be compared with the cleavage of a piece of stone by a chisel because in the acceptance of such a real determinant of *Brahman* we are to admit that *Brahman* is capable of being cut and that It also consists of portions. Again in the theory of delimitation, the genesis of *Īśvara* and *jīva* will have to be admitted if the determinant is accepted to be real. BD has elaborately discussed these points.

विम्बप्रतिविम्बभेदाभावात्, दृश्यत्वाभावाच्च[1]। उपाधिपरिच्छिन्नाकाशस्थज्योतिरंशस्यैव प्रतिविम्बो दृश्यते, न त्वाकाशस्य, दृश्यत्वाभावादेव[2] ॥३७॥

श्रीवलदेवविद्याभूषणकृता टीका।

कुतो न वाच्य इति तदनुपपत्तेरेवेत्याह, तत्र यद्युपाधेरिति[3]। परिच्छेदपक्षं निराकरोति—अनाद्यविद्यकत्वेन, रज्जुभुजङ्गवदज्ञानरचितत्वाभावेन वस्तुभूतत्वे सतीत्यर्थः। अविषयस्येति—"अगृह्यो न हि गृह्यते" इति (बृ० उ० ३।९।२६) श्रुतेः सर्वाऽस्पृष्टस्य तस्य ब्रह्मण इत्यर्थः। इदमत्र बोध्यम्—न च टङ्कच्छिन्नपाषाणखण्डवद्वास्तवोपाधिच्छिन्नो ब्रह्मखण्डविशेष ईश्वरो जीवश्च, ब्रह्मणोऽच्छेद्यत्वादखण्डत्वाभ्युपगमाच्च, आदिमत्त्वापत्तेश्चेश्वरजीवयोः, यत एकस्य द्विधा त्रिधा विधानं छेदः। नाप्यच्छिन्न एवोपाधि-

---

1 Now the theory of reflection ( प्रतिविम्बवाद ) is being refuted. For the reflection of an object it must be with a form ( रूपवत् ), limited ( परिच्छिन्न ) and consisting of limbs or parts ( सावयव ). For instance, the sun, which is reflected on a glass of water, possesses a form, limit and also limbs. On the other hand, the formless air is never reflected ; so also is *Brahman*. As none of the properties of water is reflected on water, so *Brahman*, who is all-pervading, cannot be reflected on anything since *Brahman* exists there also. The limbless sky, which is invisible, has no reflection. Similarly *Brahman* also is incapable of being reflected for the absence of any limb.

2 If it is argued that the sky, in spite of its invisibility, is actually found reflected, it may be maintained that the sun, the moon and the luminaries only of the sky are reflected but not the sky itself. Had it been so, the invisible air, time and space etc. would have been reflected.

3 v. l. तत्रोपाधेरिति।

संयुक्तो ब्रह्मप्रदेशविशेष एव स सः, उपाधौ चलत्युपाधिसंयुक्तब्रह्म-प्रदेशचलनायोगात्, प्रतिक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदादनुक्षणमुपहितत्वानुपहितत्वापत्तेः। न च कृत्स्नं ब्रह्मैवोपहितं स सः, अनुपहितब्रह्मव्यपदेशासिद्धेः। नापि ब्रह्माधिष्ठानम्, उपाधिरेव स सः, मुक्तावीशजीवाभावापत्तेरिति तुच्छः परिच्छेदवादः।

अथ प्रतिविम्बपक्षं निराकरोति निर्धर्मकस्येत्यादिना। निर्धर्मकस्योपाधि-सम्बन्धाभावात्, व्यापकस्य विम्बप्रतिविम्बभेदाभावात्, निरवयवस्य दृश्यत्वाभावाच्च ब्रह्मणः प्रतिविम्ब ईश्वरो जीवश्च नेत्यर्थः। रूपादिधर्मविशिष्टस्य परिच्छिन्नस्य सावयवस्य च सूर्यादेस्तद्विदूरे जलाद्युपाधौ प्रतिविम्बो दृष्टः, तद्विलक्षणस्य ब्रह्मणः स न शक्यो वक्तुमित्यर्थः। नन्वाकाशस्य तादृशस्यापि प्रतिविम्बदर्शनाद् ब्रह्मणः स भविष्यतीति चेत्तत्राह—उपाधीति, ग्रहनक्षत्र-प्रभामण्डलस्येत्यर्थः। अन्यथा वायुकालदिशामपि स दर्शनीयः। यत्तु ध्वनेः प्रतिध्वनिरिव ब्रह्मणः प्रतिविम्बः स्यादित्याह तन्न चारु, अर्थान्तरत्वादिति प्रतिविम्बवादोऽप्यतितुच्छः ॥३७॥

तथा वास्तवपरिच्छेदादौ सति सामानाधिकरण्यज्ञानमात्रेण न तत्त्यागश्च[1] भवेत्। तत्पदार्थप्रभावस्तत्र कारणमिति चेदस्माकमेव मतसम्मतम्[2] ॥३८॥

---

1 "तत्त्यागः—वास्तवपरिच्छेदनाशः"—RG.

2 In the Upaniṣadic expression तत्त्वमसि ( छा० उ० ६।८।७ ) the word तत् signifies *Īśvara*, and the word त्वम्, *jīva*. If the determinant is accepted to be real, the difference between these two—*Īśvara* and *jīva*—will also be real and mere knowledge of the identity of the two cannot establish the identity. This has been clarified by BD with the help of an example. A fettered man does not become a king merely by thinking that he is a king. If the extraordinary power of *Īśvara* is deemed the cause of the annihilation of the real determinant, there remains hardly any difference in the Advaitin's contention from the one held by the Vaiṣṇavas.

श्रीबलदेवविद्याभूषणकृता टीका

"ब्रह्मैवाहम्" इति ज्ञानमात्रेण तद्रूपावस्थितिः स्यादिति यदभिमतं तत् स्वरूपाधेर्वास्तवत्वपक्षे न सम्भवतीत्याह—तथा वास्तवेति। आदिना प्रतिबिम्बो ग्राह्यः। न खलु निगडितः कश्चिद्दीनो राजैवाहमिति ज्ञानमात्राद्राजा भवन् दृष्ट इति भावः। ननु ब्रह्मानुसन्धिसामर्थ्याद् भवेदिति चेत्तत्राह—तत्-पदार्थेति। तथा च स्वमतक्षतिरिति ॥३८॥

उपाधेराविद्यकत्वे तु तत्र तत्परिच्छिन्नत्वादेरप्यघटमानत्वादाविद्यकत्वमेवेति घटाकाशादिषु वास्तवोपाधिमयतद्दर्शनया[1] न तेषामवास्तवस्वप्नदृष्टान्तोपजीविनां सिद्धान्तः सिध्यति, घटमानाघटमानयोः सङ्गतेः कर्तुमशक्यत्वात्।[2] ततश्च तेषां तत्तत्

---

1 "तद्दर्शनया परिच्छेददृष्टान्तेन"—RG.

2 The determinant of these two theories cannot be unreal as well inasmuch as such course is full of blemishes. In the instance (dṛṣṭānta) cited by the Advaitins the determined *ghaṭa* (jar) or *ghaṭāmbu* (the water contained in the jar) is real whereas in the illustrated (dārṣṭāntika) an unreal determinant is strangely enough being accepted. Thus the argument of the Advaitins suffers, in this alternative, from the defect of imperfect analogy.

Now the Advaitins may argue that in the instance already cited the jar or the water in it is also unreal since from Advaita standpoint everything except *Brahman* is unreal.

To this the Vaiṣṇavas rejoin that a further analysis of the Advaita view-point will bear out the incongruity of the illustration and the illustrated. As upheld by the Advaitins the unreal objects are of two categories—empirical (*Vyāvahārika*) and illusory (*prātibhāsika*). In the illustration of the theory of reflection it is to be noted that the determined sky is *vyāvahārika* and it admits of limitation since it is composed of parts (*sāvayava*) and is changing (*vikārin*). But Brahman is devoid of parts (*niravayava*) and unchanging (*nirvikāra*). So it cannot lend itself to limitation inasmuch as limi-

सर्वमविद्याविलसितमेवेति[1] स्वरूपमप्राप्तेन तेन तेन तत्तद्-व्यवस्थापयितुमशक्यम् ॥३९॥

---

tation presupposes parts and the necessary change caused by limitation. Thus the limitation accepted as regards the unchanging partless *Brahman* must not be empirical; on the other hand, it will be illusory (*prātibhāsika*). The determinant (*paricchedaka*) of the illustration being an empirical jar, how can an Advaitin in the present case admit a non-empirical or an illusory determinant of the illustrated Brahman ? The defect of imperfect analogy thus remains unassailable.

The Advaitins without being thwarted by these arguments still find out a solution. It is not that the Advaitins are unable to cite an illustration of an illusory determinant. If consciousness may be determined in our dreams by illusory determinants as bodies etc., what is the harm in agreeing to an illusory determinant of Brahman ?

The defect in the Advaitin's view is laid bare by the Vaiṣṇavas by holding that the determinant of Brahman being illusory, the act of determining also will be illusory and the determined consciousness i.e. *jīva* and *Īśvara* will be illusory but not empirical. This is a position which an Advaitin will seldom acquiesce in.

cf. "यद्यपि तन्मते घटादेराकाशस्य तत्परिच्छेदस्य चावास्तवत्वात् तद्दृष्टान्तासम्भवस्तथापि मिथ्याभूतानामपि ब्रह्मातिरिक्तानां द्विविधं सत्त्वम्—केषाञ्चिद् व्यावहारिकं घटादिदेहादीनां केषाञ्चिच्च प्रातिभासिकं यथा रज्जुसर्पादेरिति। तथा चाकाशस्य सावयवत्वेन विकारित्वेन च व्यावहारिकस्य तत्परिच्छेदस्योपाधिकृतस्य घटमानत्वं ब्रह्मणश्च निरवयवत्वेन निर्विकारत्वेन तदुपाधेराविद्यकत्वेन च तत्परिच्छेदकस्य व्यावहारिकस्याघटमानत्वमिति प्रातिभासिकपरिच्छेद एवाङ्गीकार्यं इति न घटाकाशस्य दृष्टान्ततासम्भवः, घटाकाशपरिच्छेदस्य तन्नास्तविकत्वमुक्तं तद्व्यावहारिकस्य सत्त्वमेवेति भावः। स्वप्नस्य दृष्टान्तता च तन्मते सम्भवः। तथाहि—'देहादितत्कृतब्रह्मपरिच्छेदो मिथ्या स्वप्नदेहादिवत्' इत्येवं स्वप्नदृष्टान्तोपजीविनां सिद्धान्तः—व्यावहारिकब्रह्मपरिच्छेदो न सिध्यतीत्यर्थः।"—RG.

1 RG reads अविद्याविलास एवेति.

श्रीबलदेवविद्याभूषणकृता टीका

अथोपाधेराविद्यकत्वपक्षे परिच्छेदादिवादद्वयं निराकरोति—उपाधेरिति। आविद्यकत्वे रज्जुभुजङ्गादिवन्मिथ्यात्वे सतीत्यर्थः। तत्रोपाधिपरिच्छिन्नत्व-तत्प्रतिबिम्बित्वयोरप्यनुपपद्यमानत्वान्मिथ्यात्वमेवेति हेतोः, घटाकाशादिषु घटपरिच्छिन्नाकाशे घटाम्बुप्रतिबिम्बाकाशे च वास्तवोपाधिमयतदुभयदृष्टान्त-दर्शनया तेषां चिन्मात्राद्वैतिनामेकजीववादपरिनिष्ठत्वादवास्तवस्वप्नदृष्टान्तोप-जीविनां सिद्धान्तो न सिध्यति।

उपाधेर्मिथ्यात्वे तेन परिच्छेदः प्रतिबिम्बश्च ब्रह्मणो मिथ्यैव स्यात्। अतो मिथ्योपाधिदृष्टान्तत्वेन सत्यघटघटाम्बुनोः प्रदर्शनमसमञ्जसमेव। घटघटाम्बुदृष्टान्तप्रदर्शनं घटमानं, विद्याऽविद्यावृत्तिरूपदार्ष्टान्तिकप्रदर्शनं त्वघटमानम्। तयोः सङ्गतिः सादृश्यविलक्षणा वक्तुमशक्यैव, सादृश्याभावात्। ततश्चेति—तत्तत् सर्वं परिच्छेदप्रतिबिम्बकल्पनमविद्याविलसितमज्ञान-विजृम्भितमेव। इति—एवमुक्तरीत्या। स्वरूपमप्राप्तेन—असिद्धेन। तेन परिच्छेदवादेन। तेन प्रतिबिम्बवादेन च। तत्तद्व्यवस्थापयितुं प्रतिपादयि-तुमशक्यम्। ततश्च हृन्तृहृतन्यायेन व्यासदृष्टप्रकारकस्तद्विभागो ध्रुवः ॥३९॥

इति ब्रह्माविद्ययोः पर्यवसाने सति यदेव ब्रह्म चिन्मात्रत्वेना-विद्यायोगस्यात्यन्ताभावास्पदत्वाच्छुद्धं तदेव तद्योगादशुद्धया[1] जीवः, पुनस्तदेव जीवाविद्याकल्पितमायाश्रयत्वादीश्वरस्तदेव च तन्मायाविषयत्वाज्जीव इति विरोधस्तदवस्थ एव स्यात्।[2]

---

1 v.l. तद्योगादशुद्धः.

2 Advaitins hold that *Brahman* being determined by *avidyā* becomes *jiva*. The unsoundness of this position of the Advaitins is being shown by the Vaiṣṇavas. If *Brahman* being determined by *avidyā* remains pure, It cannot be transformed to *jiva* and again if it actually changes into *jiva*, It cannot remain pure. The Vaiṣṇavas point out another inconsistency of the Advaita view-point as regards the emergence of *Īśvara* and *jiva*. *Īśvara* owes His genesis to *māyā* which is superimposed by the *avidyā* (ignorance) of *jiva* and *jiva* originates due to the veil of *māyā* cast by *Īśvara*. Thus it in-

तत्र च शुद्धायां चित्यविद्या, तदविद्याकल्पितोपाधौ[1] तस्यामीश्वराख्यायां विद्येति, तथा विद्यावत्त्वेऽपि मायिकत्वमित्यसमञ्जसा च कल्पना स्यादित्याद्यनुसन्धेयम् ॥४०॥

श्रीबलदेवविद्याभूषणकृता टीका

ननु परिच्छेदादिवादद्वये नास्माकं तात्पर्यं तस्याजबोधनाय कल्पितत्वात्, किन्त्वेकजीववाद एव तदस्ति ।[2]

---

volves a vicious circle which the Advaitins should be ashamed of. Cf. "जीवाविद्याकल्पितेति । तथा च जीवभावं विना न मायाश्रयत्वमीश्वरस्य, तवेश्वराश्रितमायाकृतमोहं विना न जीवभाव इत्यन्योन्याश्रय इति भावः ।"—RG.

1 v.l. तद्विद्याकल्पितोपाधौ ।

2 The Advaitins finding their theories of reflection and limitation animadverted by the Vaiṣṇavas maintain that these theories are purported to demonstrate the oneness of *jīva* (*ekajīvavāda*) and that under the influence of *māyā* one single Self (*ātman*) assumes manifold forms which are the essential conditions for the various types of enjoyment. Cf. स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥ (कैवल्योपनिषद्, १२ ). While unfolding the tenet of the opponents the import of the above *śruti* has been explained by BD in the following manner. One single Self, being enveloped by *māyā*, projects one conscious entity ( *asmat* ) and three other types of entities as (i) unconscious objects, (ii) similar manifestation of other conscious Selves and (iii) the omnipotent *Īśvara*. These three are collectively called *yuṣmat*, as opposed to *asmat*. This tenet of the Advaitins has further been strengthened by another scriptural

"स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत् परितुष्टिमेति ॥[1]

( कैवल्य० उ० १२ ) इत्यादि ।

कैवल्योपनिषदि तस्यैवोपपादितत्वात् । तद्वादश्चेत्थम् "एकमेवाद्वितीयम्" इत्याद्युक्तश्रुतिभ्योऽद्वितीयचिन्मात्रो ह्यात्मा । स चात्मन्यविद्यया गुणमयीं मायां तद्वैपम्यजां कार्यसंहतिञ्च कल्पयन्नस्मदर्थमेकं युष्मदर्थांश्च बहून् कल्पयति । तत्रास्मदर्थः स्वस्वरूपः पुरुषः । युष्मदर्थश्च महदादीनि भूम्यन्तानि जडानि, स्वतुल्यानि पुरुषान्तराणि, सर्वेश्वराख्यः पुरुषविशेषश्चेत्येवं त्रिविधः । "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" ( नृसिंहोत्तरतापनीय उ० ९ ) इति श्रुत्यन्तराच्च । गुणयोगादेव कर्तृत्व-भोक्तृत्वे तत्रात्मन्यध्यस्ते, यथा स्वप्ने कश्चिद्राजधानीं राजानं तत्प्रजाश्च कल्पयति, तन्नियम्यमात्मानञ्च मन्यते, तद्वत् । जाते च ज्ञाने, जागरे च सति, ततोऽन्यन्न किञ्चिदस्तीति चिन्मात्रमेकमात्मवस्त्विति ।

तमिमं वादं निराकर्तुमाह—इति ब्रह्मेति । इति—एवं पूर्वोक्तरीत्या परिच्छेदादिवादद्वयस्य प्रत्याख्याने जाते, ब्रह्म चाविद्या चेति द्वयोः पर्यवसाने[2] सतीत्यर्थः । अत्यन्ताभावास्पदत्वादिति—अगृह्यो न हि गृह्यते ( बृ० उ० ३।९।२६ ) इत्यादि श्रुतेरेवेत्यर्थः । विरोधस्तदवस्थ इति—विरोधत्वादेवा-

---

evidence as "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" ( नृ० उ० ता० उ० ९). As in the dream all the persons and objects revealed seem to be true and with the awakening from the sleep all these manifold manifestations disappear and the dreamer only survives, so also with the dissipation of the veil of *māyā* only Consciousness remains.

1 "परितृप्तिमेति"—reading in the edition of Nirṇaya Sāgar Press.

2 RG explains as "पर्यवसाने विचारेण स्वरूपनिर्णये सति 'विरोधस्तदवस्थ एव', इत्यग्रेणास्यान्वयः ।"

शक्यव्यवस्थापन इत्यर्थः[1]। तत्र च शुद्धायामिति—'शुद्धे ब्रह्मण्यकस्माद-विद्यासम्बन्धस्तत्सम्बन्धात्तस्य जीवत्वम्। तेन जीवेन कल्पिताया मायाया आश्रयो भूत्वा तद्ब्रह्मैवेश्वरः। तस्येश्वरस्य मायया परिभूतं ब्रह्मैव तज्जीवः।' इत्यादि विप्रलापोऽयमविदुषामेव, न तु विदुषामितिभावः। मायिकत्वं प्रतारकत्वमित्यर्थः। "स एव माया" इति श्रुतिस्तु[2] ब्रह्मायत्त-वृत्तिकत्वब्रह्मव्याप्यत्वाभ्यां ब्रह्मणोऽनतिरिक्तो[3] जीव इत्येव निवेदयन्ती गतार्था[4]। "जीवेशौ" इति श्रुतिस्तु मायाविमोहितताकिंकादिपरिकल्पित-जीवेशपरतया गतार्थेति[5] न किञ्चिदनुपपन्नम् ॥४०॥

किञ्च, यद्यभेद एव तात्पर्यमभविष्यत्तर्ह्येकमेव ब्रह्मा-ज्ञानेन भिन्नं, ज्ञानेन तु तस्य भेदमयं दुःखं विलीयत इत्यपश्य-

---

1 The reading अशक्यव्यवस्थापनः is a definite improvement on the variant अशक्यव्यवस्थापयितुम्.

2 Only the logical refutation of the theories of limitation and reflection will not be sufficient for discarding these tenets but the scriptural evidence in support of these theories would have to be explained accordingly. That is why BD unravels the real import of the *śruti* स एव माया etc. The existence of *jīva* is dependent on Brahman and Brahman is wider in extent than *jīva*.

3 v.l. नातिरिक्तः.

4 v.l. निवेदयद्गतार्था,

5 The śruti जीवेशौ etc. is, in the opinion of BD, to be explained in the light of the opponents' view. *Śruti* here only conveys the stand of the Naiyāyika etc. whose intelligence is wrapped up by *māyā* ; but reality has not been revealed here.

दित्येवावक्ष्यत् ।[1] तथा श्रीभगवल्लीलादीनां वास्तवत्वाभावे सति श्रीशुकहृदयविरोधश्च जायते[2] ॥४१॥

श्रीबलदेवविद्याभूषणकृता टीका ।

अनुपपत्त्यन्तरमाह—किञ्चेति । अत्र श्रीभागवते शास्त्रे । इत्येवेति—"पूर्णः पुरुषः कश्चिदस्ति, तदाश्रितया मायया जीवो विमोहितोऽनर्थं भजति, तदनर्थोपशमनी च पूर्णस्य तस्य भक्तिः"[3]—इत्यपश्यत्, इत्येवं नावक्ष्यदित्यर्थः ॥४१॥

तस्मात् परिच्छेदप्रतिविम्बत्वादिप्रतिपादकशास्त्राण्यपि कथञ्चित्तत्सादृश्येन गौण्यैव वृत्त्या प्रवर्तेरन् ।[4] "अम्बुवदग्रहणात्तु न तथात्वम्" ( ब्र० सू० ३।२।१९ ) "वृद्धिह्रासभाक्त्वमन्त-

---

1 If identity of *jīva* and *Brahman* would have been the reality, Vyāsa could not have seen in his revelation otherwise and his teachings to his pupils also could not have been in favour of devotion to *Bhagavān* who, in order to be worshipped, must be different from the worshipper.

2 In the event of identity being real, the various forms of *Bhagavān*, would be unreal and necessarily the sportive activities (*līlā*) of *Bhagavān* would lose reality. But all the Vaiṣṇava teachers, including the author of *Śukahṛdaya*, subscribe their view for the reality of the sportive activities of *Bhagavān*.

3 The portion within inverted commas is virtually a summarised prosaic version of the verses of BH (1. 7. 4-6), already quoted in para. 30.

4 In course of the discussion just completed it is found that the theories of limitation and reflection are not applicable as regards the relation of *jīva* and *Īśvara* with *Brahman*. So the testimonial references that seemingly prove these theories cannot be understood in the primary sense, but they should be explained somehow with the help of the secondary meanings of those expressions.

र्भावादुभयसामञ्जस्यादेवम्।" ( ब्र० सू० ३।२।२० ) इति पूर्वोत्तरपक्षमयन्यायाभ्याम्[1] ॥४२॥

---

1 In the Vedāntasūtra "अम्बुवदग्रहणात्तु न तथात्वम्" BD thinks that there is categorical negation of the theory of limitation and also of the theory of reflection since Brahman is partless and all-pervading. After the refutal of the above theories in accordance with the view-point of the opponents, Vyāsa himself accepts these theories only on the basis of some similarities. As in the theory of limitation the magnitude of the determinant differs so also there is the difference of magnitude in *Brahman* and *jīva*. Again, as in the theory of reflection the sun remaining independent and unattached with the properties of water, on which it is reflected, generates in the reflection the changes occuring in water and makes it (reflection) dependent so also Brahman being independent and unattached with the attributes of *avidyā*, on which it is held to be reflected, generates in the reflection *i.e. jīva* the changes occuring in *avidyā* and makes it dependent on *Brahman*.

Although BD, in the commentary of TS, has utilised the two sūtras of Vedāntasūtra for both the theories of limitation and reflection, Ācāryas as Rāmānuja, Nimbārka, Śaṅkara etc. have requisitioned here only the theory of reflection. Even BD in the commentary of Vedāntasūtra (i.e. in Govindabhāṣya) has not brought in the theory of limitation. The interpretation resorted to here has been unhappy also. For a proper understanding of the import of these *sūtras* we propose to quote here the relevant portion from Govindabhāṣya where the Vaiṣṇava standpoint has been established not at the cost of perspicuity. "....परमात्मनो विभुत्वेन तद्विदूरपदार्थाप्रसिद्धेरुपमेयकोटेरुपमानकोटितुल्यत्वं नेत्यर्थः। विम्बविदूरे जलाद्युपाधौ परिच्छिन्नस्य सूर्यादेराभासो गृह्यते नैवं परमात्मनः, तस्यापरिच्छेदात्। अतो न तथात्वमिति वा परमात्मनः प्रतिविम्बो जीवो न भवति।...( ३।२।१९ )। प्रतिविम्बशास्त्रेण मुख्यया वृत्त्या नायं दृष्टान्तः प्रयुज्यते किन्तु गुणवृत्त्यैव वृद्धिह्रासभाक्त्वम्। साधर्म्यां-

श्रीबलदेवविद्याभूषणकृता टीका ।

तस्मादिति । तत्सादृश्येन परिच्छिन्नप्रतिबिम्बतुल्यत्वेनेत्यर्थः । "सिंहो देवदत्तः" इत्यत्र यथा गौण्या वृत्त्या सिंहतुल्यत्वं देवदत्तस्योच्यते, न तु सिंहत्वं तद्वदित्यर्थः । नन्वेवं केन निर्णीतमिति चेत्, सूत्रकृता श्रीव्यासेनैवेति तत् सूत्रद्वयं दर्शयति ।

तत्रैकेन तद्वादद्वयमसम्भवान्निरस्यति—अम्बुवदिति । यथाम्बुना भूखण्डस्य परिच्छेदः, एवमुपाधिना ब्रह्मप्रदेशस्य स स्यात् । न, अम्बुना भूखण्डस्येवोपाधिना ब्रह्मप्रदेशस्य ग्रहणाभावात् । "अगृह्यो न हि गृह्यते" (बृ० उ० ३।९।२६) इति हि श्रुतिः । अतो न तथात्वं—ब्रह्मण उपाधिपरिच्छिन्नत्वं नेत्यर्थः ।

यद्वा, अम्बुनि यथा रवेः प्रतिबिम्बः परिच्छिन्नस्य गृह्यते, एवमुपाधौ ब्रह्मणः प्रतिबिम्बो व्यापकस्य न गृह्यते । अतो न तथात्वम्—तस्य प्रतिबिम्बो नेत्यर्थः । तर्हि शास्त्रद्वयं कथं सङ्गच्छते ? तत्राह—वृद्धीति द्वितीयेन । तद्द्वयं न मुख्यवृत्त्या प्रवर्तते, किन्तु वृद्धिह्रासभाक्त्वं गुणांशमादायैव । यथा महदल्पौ भूखण्डौ, यथा च रवितत्प्रतिबिम्बौ वृद्धिह्रासभाजौ, तथा परेशजीवौ स्याताम् । कुतः ? अन्तर्भावात्, एतस्मिन्नंशे शास्त्रतात्पर्यपूर्तेः । एवं सत्युभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यात् सङ्गतेरित्यर्थः । पूर्वन्यायेन परिच्छेदादिवादद्वयस्य खण्डनम्, उत्तरन्यायेन तु गौणवृत्त्या तस्य व्यवस्थापनमिति । ब्रह्मणः खण्डः प्रतिबिम्बो वा जीव एवेति सूत्रकृतां मतम् । ईशोऽपि ब्रह्मणः खण्डः प्रतिबिम्बो वेति मायिनामीशविमुखानां मतमिति बोद्धव्यम् । ॥४२॥

---

शमाश्रित्योपलक्षणमेतत् । कुतः, अन्तर्भावात् । एतस्मिन्नेवांशे शास्त्रतात्पर्यपरिसमाप्तेरित्यर्थः । एवं सत्युभयसामञ्जस्यात् । उपमानोपमेययोः सङ्गतेरित्यर्थः । अयं भावः—पूर्वसूत्रे बिम्बप्रतिबिम्बभावस्य मुख्यस्य निरासात् किञ्चित् साधर्म्यमादाय प्रकृते तद्भावः प्रकीर्त्यते । तच्चेत्थं बोध्यम्—सूर्यो हि वृद्धिभाग् जलाद्युपाधिधर्मैरसम्पृक्तः स्वतन्त्रश्च तत्प्रतिबिम्बाः सूर्यकारसद्-ह्रासभाजो जलाद्युपाधिधर्मयोगिनः परतन्त्राश्च भवन्त्येवं परमात्मा विभुः प्रकृतिधर्मैरसंपृक्तः स्वतन्त्रश्च तदंशका जीवास्त्वणवः प्रकृतिधर्मयोगिनः परतन्त्राश्चेति । तस्मादियमुपमा तद्भिन्नत्वतदधीनत्वतत्सादृश्यैरेव धर्मैः सिद्धा ।...." (३।२।२०)

तत एवाभेदशास्त्रा[1]ण्युभयोश्चिद्रूपत्वेन[2] जीवसमूहस्य[3] दुर्घट-घटनापटीयस्या स्वाभाविकतदचिन्त्यशक्त्या[4] स्वभावत एव

---

1 The word अभेदशास्त्राणि is to be construed with योजनीयानि occuring at the end of the paragraph.

2 RG reads चेतनत्वेन.

3 RG reads the expression तदेकत्वेऽपि after this word.

4 The atomic rays (रश्मिपरमाणु) ) of the sun are neither different from nor identified with the sun. This is possible due to the abnormally strange power of *Bhagavān*. The non-difference of *jīva* from *Brahman* is established by the fact that both *jīva* and *Brahman* are conscious. Again from the part and whole relation of them the difference is also proved. But due to the unthinkable 'Power' ( अचिन्त्यशक्ति ) of *Bhagavān* *jīva* and *Brahman* are one and different at the same time just as the rays are one with and different from the sun at the same time. The reconciliation of the diametrically opposite phenomena may be accomplished by *māyā*, the inessential power of *Brahman*. However, one thing should not be lost sight of that the relation between *jīva* and *Brahman* is that between a part and the whole. Evidently this tenet cannot be agreed to by the Advaitins who have established complete identity between *jīva* and *Brahman*. But strangely enough Śaṅkarācārya, a chief exponent of Advaita philosophy, has not been ashamed to write in the *bhāṣya* of Vedāntasūtras"मन्त्रवर्णाच्च" (२।३।४४) and "अपि च स्मर्यते " (२।३।४५) that *jīva* is a part of *Brahman*. There he quotes *śruti* and *smṛti* in favour of *jīva* being a portion. This has strengthened the stand of the Vaiṣṇavas who have always been consistent as regards the relation between *jīva* and *Brahman*. We quote here from Brahmasūtra-bhāṣya of Śaṅkara (2. 3. 44 and 45) :—

तद्रश्मिपरमाणुगणस्थानीयत्वात्तद्व्यतिरेकेणाव्यतिरेकेण च विरोधं [1]परिहृत्याग्रे[2] मुहुरपि तदेतद्व्याससमाधिलब्धसिद्धान्तयोजनाय योजनीयानि ॥४३॥

---

"मन्त्रवर्णश्चैतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पूरुष:। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि॥' (छा० उ० ३।१२।६) इति। अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति; 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात्। अंशः पादो भाग इत्यनर्थान्तरम्। तस्मादप्यंशत्वावगमः।" (२।३।४८)॥ "ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—'ममैवांशो जीवलोके जीवभूतः सनातनः' (१५।७) इति। तस्मादप्यंशत्वावगमः।...." (२।३।४५)॥

1 Vaiṣṇavācāryas hold that there are occasions when actual difference between two entities is ignored and secondarily non-difference is admitted. The rays of the sun coming out of its source again dissolve there. These rays, although different from the sun, are said only secondarily to be one with the sun. *Jivas* also, due to their merits and demerits (धर्माधर्म or अदृष्ट), emerging from *Brahman* become attached with bodies etc., move on in the cycle of birth and death and in the event of the attainment of knowledge (विद्या) become detached from the bodies etc., re-enter into *Brahman*. *Jivas* thus being distinct from *Brahman* are secondarily identified with It. Cf. "यथैकस्य सूर्यस्य तेजोमयस्य बहिर्निर्गच्छन्तो रश्मिगणाः सूर्यमण्डले पुनः प्रविशन्तोऽपि न दृश्यन्ते सूर्यमण्डलाद्भिन्ना अभेदेनोपचर्यन्ते, तथाऽदृष्टादिवशाद् ब्रह्मणः सकाशान्निःसरन्तो देहसङ्गेन संसारिणः कदाचिद् विद्योत्पत्त्या देहसङ्गनिर्मुक्ता ब्रह्मणि पुनः प्रविशन्तो ब्रह्मतो भिन्ना अप्यभेदेनोपचर्यन्त इत्यर्थः।"—RG.

2. v.l. परिहृत्यैवाग्रे।

श्रीबलदेवविद्याभूषणकृता टीका ।

तत इति—परिच्छेदादिशास्त्रद्वयस्य तत्सादृश्यार्थकत्वेन नीतत्वादेव हेतोः "त्वं वा अहमस्मि भगवो देव, अहं वै त्वमसि तत्त्वमसि" इत्यादीन्यभेदशास्त्राणि । तदेतद्व्यासस्समाधिसिद्धान्तयोजनाय मुहुरप्यग्रे योजनीयानीति सम्बन्धः । केन हेतुनेत्याह—उभयोरीशजीवयोश्चिद्रूपत्वेन हेतुना । यथा गौरश्यामयोस्तरुणकुमारयोर्वा विप्रयोर्विप्रत्वेनैक्यम् । ततश्च जात्यैवाभेदो, न तु व्यक्तोरित्यर्थः ।[1] तथा जीवसमूहस्य दुर्घटघटनापटीयस्या तदचिन्त्यशक्त्या स्वभावत एव[2] तद्रश्मिपरमाणुगणस्थानीयत्वा[3]त्तद्व्यतिरेकेण[4], अव्यतिरेकेण च हेतुना विरोधं परिहृत्येति ।[5] परेशस्य खलु स्वरूपानुबन्धिनी पराख्या शक्तिरष्णतेव रवेरस्ति । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी

---

1 The two young Brahmins—one of fair and another of dark complexion—are certainly different individuals but there is oneness as regards the universal, brahminhood, inhering in both of them. Similarly, although there is a lot of difference between conscious *Brahman* and conscious *jīva* inasmuch as the consciousness in *Brahman* is one, eternal and all-pervading whereas that in *jīva* is numerous, transient and restricted, still there is oneness since the universal consciousness ( चेतनत्व ) inheres in both. An extract from RG may be presented here—"चेतनत्वरूपैकधर्मत्वमेवेश्वरजीवयोरेकत्वमित्यर्थः । यद्यपि तयोर्नैकं चेतनमीश्वरस्य नित्यसर्वविषयकमेकं चैतन्यम्, जीवानां चानित्यमसर्वविषयकं नानाविधं तथापि तदुभयोरेकं चैतन्याश्रयत्वमङ्गीकृत्य समाधेयम् ।"

2 "स्वभावत एव कारणं विना नित्यदैव"—RG.

3 "तद्रश्मिपरमाणुगणस्थानीयत्वात्—परमेश्वरस्य रश्मिपरमाणुगणतुल्यधर्मत्वाद् रश्मितुल्यता च, प्रकाशमयत्वेन निरवयवस्य ब्रह्मणस्तेजस्वितानुपपत्त्या न वास्तवरश्मिता तेषाम् ।"—RG.

4 B and C read तद्व्यतिरेके.

5 D and E read परिहृत्यापि.

ज्ञानबलक्रिया च' (श्वे० उ० ६।८) इति मन्त्रवर्णात्, 'विष्णुशक्तिः परा प्रोक्ता' ( विष्णुपुराण, ६।७।६१ ) इति स्मरणाच्च। सा हि तदितराग्निखिलान्नियमयति। यस्मात् तदन्ये सर्वेऽर्थाः स्वस्वभावमत्यजन्तो वर्तन्ते। प्रकृतिः कालः कर्म च स्वान्तःस्थितमपीश्वरं स्प्रष्टुं न शक्नोति, किन्तु ततो बिभ्यदेव स्वस्वभावे तिष्ठति। जीवगणश्च तत्सजातीयोऽपि न तेन संपर्चितुं शक्नोति किन्तु तमाश्रयन्नेव वृत्तिं लभते, मुख्यप्राणमिव श्रोत्रादिरिन्द्रियगण इति। तथा "यद्वृत्तिर्यदधीना स तद्रूपः" इत्यभेदशास्त्रस्यापि भेदशास्त्रेण सार्धमविरोधोऽयं श्रीव्याससमाधिलब्धसिद्धान्तसव्यपेक्ष इति। तथा चात्रेशजीवयोः स्वरूपाभेदो नास्तीति सिद्धम् ॥४३॥

तदेवं मायाश्रयत्वमायामोहितत्वाभ्यां स्थिते द्वयोर्भेदे तद्भजनस्यैवाभिधेयत्वमायातम्[1] ॥४४॥

श्रीबलदेवविद्याभूषणकृता टीका।

तदेवमिति स्फुटार्थम्। तद्भजनस्य मायानिवारकस्येत्यर्थः ॥४४॥

अतः श्रीभगवत एव सर्वहितोपदेष्टृत्वात्, सर्वदुःखहरत्वात्, रश्मीनां सूर्यवत् सर्वेषां परमस्वरूपत्वात्[2],

---

1 The difference between *jiva* and *Brahman* being established it is settled that the worship of *Brahman* is the course that one should have recourse to for alleviating the veil of *māyā*. Thus the worship of *Brahman* is the import ( अभिधेय ) of this treatise.

2 The rays are not identical with the sun because there are differences between these two. The sun is one, the rays are many; the sun is round, the rays are long; the sun is the source and owes its existence to nothing, the rays originate from the sun. Thus the sun is not of the same nature ( स्वरूप ) as of the rays. But it should not be forgotten that the sun is the ultimate nature ( परमस्वरूप ) of the rays since

सर्वाधिकगुणशालित्वात्, परमप्रेमयोगत्व[1]मिति प्रयोजनञ्च[2] स्थापितम् ॥४५॥

---

in essence i.e. in ultimate analysis these rays and the sun are found to be the same. Similarly for the differences already shown in the previous paragraphs *Bhagavān* and *jīva* are not of the same nature. The difference of these two has again been stressed here by BD by quoting the authority of the Upaniṣad where it has been maintained that *jīvas* are the bodies ( शरीर ) of the embodied (शरीरी) *Ātman* or *Bhagavān*. So in view of the difference of these two, no question arises as to one being the nature of the other. But both *Bhagavān* and *jīva* being conscious they may be held to be ultimately of the same nature. Cf. "सूर्यो यथा रश्मीनां स्वरूपं न, किन्तु परमस्वरूपमेव भवत्येवं जीवानां भगवानिति स्वरूपैक्यं निरस्तम् ।"—BD.

1 Although *Ātman* is the object of love ( प्रेम ) for everybody, *Bhagavān* does not cease to be the object of love; on the other hand, *Bhagavān* wins the supreme and unparallelled love of everybody. The reasons of such supreme love for *Bhagavān* are four in number. *Bhagavān* directs man in the proper path through which he may attain total welfare. He alleviates all sufferings. He is the ultimate nature of all beings and possesses the most excellent qualities. Any one of these four reasons is sufficient for winning love of *jīvas*. Under such circumstances it is quite logical that He would be the object of extreme love of *jīvas*.

2 The result (प्रयोजन) of the study of the work is the attainment of *Bhagavān*. Here JG indicates a second result by the use of the word ' च ' (and), the significance of which is unfolded by RG as—"चकारात् तत्प्रेमापि तत्प्रयोजनम्". Love for *Bhagavān* is in itself a result which everybody cherishes to attain.

श्रीबलदेवविद्याभूषणकृता टीका ।

मायामोहनिवारकत्वाद् यस्य भजनमभिधेयं, स भगवानेव भजतां प्रेमयोग्य इत्यर्थादागतमित्याह—अत इति । अतो मायामोहनिवारकभजनत्वाद्भगवत एव परमप्रेमयोग्यत्वमिति सम्बन्धः । जीवात्मा प्रेमयोग्यः, परमात्मा भगवांस्तु परमप्रेमयोग्य इत्यर्थः । कुत इत्यपेक्षायां हेतुचतुष्टयमाह—सर्वेति । रश्मीनामित्यादि—सूर्यो यथा रश्मीनां स्वरूपं न, किन्तु परमस्वरूपमेव भवत्येवं जीवानां भगवानिति स्वरूपैक्यं निरस्तम् । अन्तर्यामिब्राह्मणात्[1] सौबालब्राह्मणाच्च[2] 'जीवात्मानः परात्मनः शरीराणि भवन्ति, स तु तेषां शरीरी' इति भेदः प्रस्फुटो ज्ञातः । अतः सर्वाधिकेति ॥४५॥

तत्रा[3]भिधेयञ्च तादृशत्वेन[4] दृष्टवानपि, यतस्तत्प्रवृत्त्यर्थं

---

1 अन्तर्यामिब्राह्मण is the seventh *Brāhmaṇa* of the third chapter of Bṛ. U. Although there is no such expression in the said *Brāhmaṇa* of Bṛ. U., the sense may be found in Bṛ. U. 3. 7. 15 which reads as—यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमध्यात्मम् ।

2 Perhaps by *Saubāla Brāhmaṇa* BD means the *Subālopaniṣad* which contains almost analogous passages with those of अन्तर्यामिब्राह्मण. In the seventh *Khaṇḍa* of *Subālopaniṣad* there is no direct reference to the relation of *Brahman* and *jīva* as that between the embodied and the bodies (शरीर-शरीरिभाव).

3 "तत्र समाधौ"—RG.

4 Commentators differ as regards the interpretation of this word. Cf. "तादृशत्वेन मायानिवारकत्वेन"—BD, "तादृशत्वेन परमप्रेमास्पदभगवत्प्राप्तिहेतुत्वपुरस्कारेण"—RG. If one resorts to the path of devotion ( भक्तियोग), one can get rid of the veiling influence of *māyā* and can attain *Bhagavān* who is the abode of supreme love. Thus the two interpretations do not differ materially.

श्रीभागवताख्यामिमां सात्वतसंहितां प्रवर्तितवानि[1]त्याह—अनर्थोपशममिति। भक्तियोगः श्रवणकीर्तनादिलक्षणः साधनभक्तिः, न तु प्रेमलक्षणः[2]। अनुष्ठानं ह्युपदेशापेक्षं प्रेम तु तत्प्रसादापेक्षमिति तथापि तस्य[3] तत्प्रसादहेतो[4]स्तत्प्रेमफलगर्भत्वात् साक्षादेवान-

---

1 Śrīvyāsa manifested the BH with a view to introducing the measures which finally lead to *bhakti* (devotion). Although there is the word 'चक्रे' (literally, composed) in BH 1. 7. 6 JG explains it as 'प्रवर्तितवान्' (manifested).

2 The ultimate aim is *preman* or *premabhakti* but it cannot be attained without sufficient efforts or without having recourse to the means which are called *sādhanas* or *sādhanabhakti*. These *sādhanas* are nine in number—listening, chanting, recalling, service towards the feet of Viṣṇu, worship, salutation, slavery, friendship & unworriedness for the body. Cf.

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।

( भा: ७।५।२३-२४ )

Eternal *preman* for Kṛṣṇa cannot be caused but it manifests itself when the mind is purified by resorting to listening etc. Cf.

नित्यसिद्ध कृष्णप्रेम साध्य कभु नय ।
श्रवणादि-शुद्ध चित्ते करये उदय ॥ ( CC 2. 22 )

3 "तस्य भजनस्य"—RG. "तस्य श्रवणादिलक्षणस्य"—BD.

4 "तत्प्रसादहेतोर्भगवत्प्रसादहेतोः"—RG.

र्थोपशमनत्वं[1], न त्वन्य[2]सापेक्षत्वेन, "यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ (भा० ११।२०।३२) "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गम्"--( भा० ११।२०।३३ ) इत्यादेः। ज्ञानादेस्तु भक्तिसापेक्षत्वमेव, "श्रेयःसृतिं भक्तिम्" ( भा० १०।१४।४ ) इत्यादेः।[3] अथवा, अनर्थस्य संसारव्यसनस्य तावत् साक्षादव्यवधानेनोपशमनं

---

1 Worship ( भजन ) causes the favour of *Bhagavān* ( भगवत् प्रसाद ) which leads to the alleviation of *māyā* through the stage of the attainment of devotion ( प्रेमभक्ति ). The problem is that if worship ( भजन ) results in alleviation of *māyā* ( अनर्थोपशम ) through the intermediate stages ( द्वार ) as favour ( प्रसाद ) and devotion ( प्रेम ), it cannot be said that alle-. viation ( उपशम ) comes directly ( साक्षात् ) from worship. To this it may be maintained that devotion ( प्रेम ) does not require to be caused since it is eternal; but what it requires is the manifestation by worship. So in view of the eternity of devotion ( प्रेम ) the so-called intermediate stage is not considered worth taking into account. ( प्रेमा च स्वतःसिद्ध एव, साध्यता च तस्य प्राकट्यमात्रमिति निरपेक्षत्वकथनं तस्य--RG). This stand has been in consonance with the BH where it has expressly been observed that everything including *svarga* and *mokṣa* can be achieved by *bhaktiyoga*.

2 RG reads स त्वस्य.

3 Although it is the contention of the Advaitins that knowledge ( ज्ञान ) is essential for *mokṣa*, the Vaiṣṇavas hold that worship is the indispensable condition for the attainment of knowledge. Knowledge without worship is compared with mere chaff. As husking of chaff is of no avail so also having recourse to knowledge without worship is bound to end in smoke. In support of this there is a *śloka* of BH—

श्रेयःसृतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये।

सम्मोहादिद्वयस्य तु प्रेमाख्यस्वीयफलद्वारेत्यर्थः ।[1] अतः पूर्ववदेवात्राभिधेयं दर्शितम् ॥४६॥

श्रीबलदेवविद्याभूषणकृता टीका ।

तथाभीति । तादृशत्वेन मायानिवारकत्वेन । दृष्टवानपि श्रीव्यासः । अनुष्ठानं कृतिसाध्यम् । तत्प्रसादेति भगवदनुग्रहेत्यर्थः । तस्य श्रवणादिलक्षणस्य । अन्यसापेक्षत्वेन कर्मादिपरिकरत्वेन । ज्ञानादेस्त्विति—ज्ञानमत्र "यस्य ब्रह्म" (६ पृः) इत्युक्तब्रह्मविषयकम् । सम्मोहादीत्यादिपदादात्मनो जडदेहादिरूपतामननं ग्राह्यम् । अत इति । अत्र—अनर्थेति वाक्ये ॥४६॥

अथ पूर्ववदेव प्रयोजनञ्च स्पष्टयितुं पूर्वोक्तस्य पूर्णपुरुषस्य च श्रीकृष्णस्वरूपत्वं व्यञ्जयितुं, ग्रन्थफलनिर्देशद्वारा तत्र तदनुभवान्तरं प्रतिपादयन्नाह—यस्यामिति । भक्तिः प्रेमा, श्रवणरूपया

---

तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथा स्थूलतुषावघातिनाम् ॥ (10.14.4)

SR finds out the implication of this śloka as follows :— "अयं भावः—यथाऽल्पप्रमाणं धान्यं परित्यज्यान्तःकणहीनान् स्थूलधान्याभासांस्तुषानेवावघ्नन्ति तेषां न किञ्चित् फलमेवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतन्ते तेषामपीति ।"

1 By the word अथवा JG signifies his dissatisfaction with the previous exposition. Cf. सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥ तन्त्रवार्तिक, १।३।४ सू ). The cause of dissatisfaction is that anything which is achieved through stages is not achieved directly (साक्षात्). The second interpretation proposed by JG is : Worship directly alleviates अनर्थ i.e. the worldly sufferings, but the other two types of undersirable element viz. delusion (मोह ) and consideration of this body as self (देहाभिमान) are alleviated through the manifestation of devotion ( प्रेम ). Cf. "ननु साक्षात् साधनत्वं द्वारानपेक्षमिति सिद्धान्त इत्यत आह—अथवेति । 'मोहादिद्वयस्य तु' इत्यस्य 'उपशम' मित्यनुषङ्गेणान्वयात् तुकारेण साक्षाद् व्यवच्छेदः । मोहादीत्यादिपदेन देहाभिमानपरिग्रहः ।"—RG.

साधनभक्त्या[1] साध्यत्वात् । 'उत्पद्यते' आविर्भवति । तस्यानुषङ्गिकं गुणमाह—शोकेति, अत्रैषां संस्कारोऽपि नश्यतीति भावः ।

---

1 Almost all the later Vaiṣṇava teachers classify *bhakti* as *sādhana-bhakti*, *bhāvabhakti* and *premabhakti* (Cf. सा भक्तिः साधनभक्तिर्भावभक्तिः प्रेमभक्तिरिति त्रिविधा—भक्तिरसामृतसिन्धुबिन्दु P. 26). *Bhāvabhakti* is the previous stage of *premabhakti* and accordingly *preman* is an advanced stage of *bhāva*. (Cf. भावभक्तिपरिपाक एव प्रेमा—ibid., P. 72). The different stages of *bhakti*, which culminate in the manifestation of *preman*, have been enumerated in two *kārikās*—

आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया ।
ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचिस्ततः ।
अथासक्तिस्ततो भावस्ततः प्रेमाभ्युदञ्चति ।
साधकानामयं प्रेम्णः प्रादुर्भावे भवेत् क्रमः ॥ (ibid. P. 32)

It is to be noted here that this order is not a necessary one; but in most cases the devotees are found to cross these stages in the above-mentioned order.

2 The seventh case-ending indicated by the suffix वत् is inflected to signify the nominative absolute ( भावे सप्तमी ) and the word means—'in the event of the manifestation of *preman* (this )'. The result of such manifestation is the annihilation of all grief, infatuation and fear. Moveover, *preman* destroys the seeds (impressions) even of these grief etc. So long as there is the psychic body (sūkṣmaśarira), the impressions can remain there. But with the manifestation of *preman*, the psychic body (liṅgaśarira) is blotted out of existence; the series of gross body (sthūlaśarira) also is necessarily ended there due to the lack of its seed, the psychic body. This is the contention of *Bhagavān* in BH 5. 5. 6.

"प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्" इति (भा० ५।५।६) श्रीऋषभ[1]देववाक्यात्। परमपूरुषे[2] पूर्वोवत-पूर्णपुरुषे। किमाकार इत्यपेक्षायामाह—कृष्णे। "कृष्णस्तु भगवान् स्वयम्" इत्यादि शास्त्रसहस्रभावितान्तःकरणानां परम्परया तत्प्रसिद्धिमध्यपातिनाञ्चासंख्यलोकानां तन्नामश्रवणमात्रेण यः प्रथमप्रतीतिविषयः[3] स्यात्, तथा तन्नाम्नः प्रथमाक्षरमात्रं मन्त्राय कल्पमानं यस्याभिमुख्याय स्यात् तदाकार इत्यर्थः। आहुश्च नामकौमुदीकाराः—"कृष्णशब्दस्य तमालश्यामलत्विषि यशोदायाः स्तनन्धये[4] परब्रह्मणि रूढिः" इति ॥४७॥

श्रीबलदेवविद्याभूषणकृता टीका।

अथेति। प्रयोजनं भगवत्प्रेमलक्षणम्। तत्रेति तत्र समाधौ श्रीव्यासस्यान्य-मनुभवमित्यर्थः। आविर्भवतीति—प्रेम्णः परासारांशत्वेनोत्पत्त्यसम्भवादित्यर्थः।

---

1 Ṛṣabha is the name of Bhagavān. (Cf. ऋषभ इत्यपदेशो नाम यस्य स भगवान्....—SR under BH 5. 5. 28).

2 B reads पुरुषे.

3 Kṛṣṇa means so many things. But by its very nature the word Kṛṣṇa signifies Vāsudeva. Kṛṣṇa is so kind that He favours even that person who has not yet finished uttering the word Kṛṣṇa but has only uttered the first syllable.

4 One who sucks the breast of Yaśodā. This epithet is necessary for the differentiation of this body of Kṛṣṇa from other manifestations. It cannot be taken literally since Kṛṣṇa, in his later stage of boyhood, gave up sucking the breast of Yaśodā. (Cf."यशोदास्तनन्धय इति शरीरपरिचयाय, न तु तद्घटितं कृष्णपदप्रवृत्ति-निमित्तम्, किशोरमूर्तौ यशोदास्तनपानाभावात् यशोदाविशेषेणा-परिचयाच्च"—RG).

तस्येति प्रेम्णः। अत्र प्रेम्णि सति। "कृष्णस्तु भगवान्" इति श्रीसूतादीनां श्रीजयदेवादीनामन्यासंख्यलोकानामित्यर्थः। 'तन्नाम' इति, 'तन्नाम्नः' इति चोभयत्र कृष्णेति नाम बोध्यम्। रूढिरिति प्रकृतिप्रत्ययसम्बन्धं विनैव यशोदासुते प्रसिद्धिर्मण्डपशब्दस्येव गृहविशेष इत्यर्थः ॥४७॥

अथ तस्यैव प्रयोजनस्य ब्रह्मानन्दानुभवादपि परमत्वमनुभूतवान्। यतस्तादृशं शुकमपि तदानन्दवैशिष्ट्यलम्भनाय तामध्यापयामासेत्याह—स संहितामिति। कृत्वानुक्रम्य चेति—प्रथमतः स्वयं संक्षेपेण कृत्वा पश्चात्तु श्रीनारदोपदेशादनुक्रमेण विवृत्येत्यर्थः। अतएव श्रीमद्भागवतं भारतानन्तरं यदत्र श्रूयते, यच्चान्यत्राष्टादशपुराणानान्तरं भारतमिति तद्द्वयमपि समाहितं स्यात्।[1] ब्रह्मानन्दानुभवनिमग्नत्वात् निवृत्तिनिरतं सर्वतो निवृत्तौ निरतं, तत्राव्यभिचारिणमपीत्यर्थः ॥४८॥

श्रीबलदेवविद्याभूषणकृता टीका।

अथेति ब्रह्मानन्दाद् यस्य ब्रह्मेत्युक्तवस्तुसुखादपि। परमत्वमुत्कृष्टत्वमनुभूतवान् श्रीव्यासः। तादृशं तदानन्दानुभविनमपि। तदानन्देति—कृष्णप्रेमानन्दप्रापणायेत्यर्थः। अत एवेति। यदत्रेति—अत्र श्रीभागवते। अन्यत्र मात्स्यादौ 'अष्टादशपुराणानि कृत्वा सत्यवतीसुतः। चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितम्' इत्यनेनेत्यर्थः। तत्रेति—निवृत्तावित्यर्थः ॥४८॥

तमेतं श्रीवेदव्यासस्य समाधिजातानुभवं श्रीशौनकप्रश्नोत्तरत्वेन विशदयन् सर्वात्मारामानुभवेन सहेतुकं संवादयति—

---

1 See foot note 1, P. 34.

आत्मारामाश्चेति । निर्ग्रन्था विधिनिषेधातीता निर्गताहङ्कारग्रन्थयो वा । अहैतुकीं फलानुसन्धिरहिताम् । अत्र सर्वाक्षेपपरिहारार्थमाह —इत्थम्भूत आत्मारामाणामप्याकर्षणस्वभावो गुणो यस्य स इति । तमेवार्थं श्रीशुकस्याप्यनुभवेन संवादयति—हरेर्गुणेति । श्रीव्यासदेवाद् यत्किञ्चिच्छ्रुतेन गुणेन पूर्वमाक्षिप्ता मतिर्यस्य सः । पश्चादध्यगाद् महद्विस्तीर्णमपि । ततश्च तत्संकथासौहार्देन नित्यं विष्णुजनाः प्रिया यस्य तथाभूतो वा, तेषां प्रियो वा स्वयमभवदित्यर्थः ।

अयं भावः—ब्रह्मवैवर्तानुसारेण पूर्वं तावदयं गर्भमारभ्य श्रीकृष्णस्य स्वैरितया मायानिवारकत्वं ज्ञातवान् । ततः स्वनियोजनया श्रीव्यासदेवेनानीतस्य तस्यान्तर्दर्शनात्तन्निवारणे सति, कृतार्थम्मन्यतया स्वयमेकान्तमेव गतवान् । तत्र श्रीवेदव्यासस्तु तं वशीकर्तुं तदनन्यसाधनं श्रीभागवतमेव ज्ञात्वा, तद्गुणातिशयप्रकाशमयांस्तदीयपद्यविशेषान् कथञ्चिच्छ्रावयित्वा तेन तमाक्षिप्तमतिं कृत्वा, तदेव पूर्णं तमध्यापयामासेति श्रीभागवतमहिमातिशयः प्रोक्तः । तदेवं दर्शितं वक्तुः श्रीशुकस्य वेदव्यासस्य च समानहृदयम् । तस्माद् वक्तुर्हृदयानुरूपमेव सर्वत्र तात्पर्यं पर्यालोचनीयं नान्यथा । यद् यत्तदन्यथा पर्यालोचनं, तत्र तत्र कुपथगामितैवेति निष्टङ्कितम् ।[1] १।७। श्रीसूतः[2] ॥४९॥

1 Here ends the discussion and interpretation of BH 1. 7. Para. 30 started with a few ślokas of BH 1. 7 and upto this para (para. 49) JG has explained them to a nicety. Hence comes here the marking as 1. 7.

2 As in para. 29 it is to be construed as श्रीसूतः श्रीशौनकं प्रति निर्धारयति ।

. . . . . .

श्रीबलदेवविद्याभूषणकृता टीका ।

समाधिदृष्टस्यार्थस्य सर्वतत्त्वज्ञसम्मतत्वमाह—तमित्यादिना । निर्गताहङ्कारेति, महत्तत्त्वाज्जातोऽयमहङ्कारः, न तु स्वरूपानुबन्धीति बोध्यं, द्वितीये सन्दर्भे[1] एवमेव निर्णेष्यमाणत्वात् । तदीयपद्यविशेषानिति पूतनाधात्रीगतिदानपाण्डवसारथ्यप्रतीहारत्वादिप्रदर्शकान्[2] कतिचिच्छ्लोकानित्यर्थः । ब्रह्मवैवर्ते शुको योनिजातः, भारते त्वयोनिजातः कथ्यते[3], दारग्रहणं कन्यासन्ततिश्चेति । तदेतत् सर्वं कल्पभेदेन सङ्गमनीयम् ॥४९॥

अथ क्रमेण विस्तरतस्तथैव तात्पर्यं निर्णेतुं सम्बन्धाभिधेयप्रयोजनेषु षड्भिः सन्दर्भैर्निर्णेष्यमाणेषु प्रथमं यस्य वाच्यवाचकतासम्बन्धीदं शास्त्रं तदेव "धर्मः प्रोज्झितकैतवः" इत्यादिपद्ये सामान्याकारतस्तावदाह—'वेद्यं वास्तव[4]मत्र वस्तु' (भाः १।१।२)

---

1 There is, we believe, no such discussion in the second Sandarbha. Most probably it is a scribal mistake for the third Sandarbha. Scholars may verify whether a similar discussion has been initiated in paragraphs No. 29 and 46 of Paramātmasandarbha.

2 पूतनाधात्रीगतिदान—BH 3. 2. 23 ; पाण्डवसारथ्य BH 1. 9. 39 and 1. 15. 17 ; प्रतीहारत्व—BH 7. 15. 76 (?)

3 cf. अरण्यामेव सहसा तस्य शुक्रमवापतत् ।
सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ॥
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ।
( महाभारत, शान्तिपर्व, ३२४।८-९ )

In other works as देवीभागवत, अग्निपुराण etc. the same story is repeated. It has not been possible to find out any scriptural evidence of Śuka's birth from the womb of any human being.

4 As the first explanation SR says that the real (वास्तव) object ( वस्तु ) is to be known in this work viz. BH. This has been quoted by JG in this paragraph. As an alternative explanation SR further holds that the word *vāstava* means (i) the part of *Vastu* (*Bhagavān*) i.e., *jīva* (ii) the power

इति ।। टीका च—"अत्र श्रीमति सुन्दरे भागवते[1]......वास्तवं परमार्थभूतं वस्तु वेद्यं, न तु वैशेषिकादिवद् द्रव्यगुणादिरूपम्" इत्येषा ।।१।१।[2] श्रीवेदव्यासः ।।५०।।

## श्रीबलदेवविद्याभूषणकृता टीका

संक्षेपेणोक्तं सम्बन्धादिकं विस्तरेण दर्शयितुमुपक्रमते—अथेत्यादि । तथैवेति—श्रीशुकादिहृदयानुसारेणेत्यर्थः । सामान्यत इति—अनिर्दिष्ट-स्वरूपगुणविभूतिकथनायेत्यर्थः[3]। वैशेषिकादिवदिति कणादगौतमोक्तशास्त्र-वदित्यर्थः ।।५०।।

---

of *Vastu* i.e. *māyā*, (iii) the effect produced by *Vastu* i.e. *jagat*, and it is maintained that these three 'related to *Vastu*' i.e. *Vāstavas* are not different from *Vastu*. Cf. यद्वा वास्तव-शब्देन वस्तुनोंऽशो जीवः, वस्तुनः शक्तिर्माया च, वस्तुनः कार्यं जगच्च तत् सर्वं वस्त्वेव न ततः पृथगिति वेद्यम्—SR on BH 1. 1. 2. Without going into details RG hints at this by holding—"अभिधेयं तच्च द्विविधं वास्तवतत्त्वं वस्तुतत्त्वं च ।"

1 All the editions of TS read भागवते वास्तवं etc. as if there is no discontinuity in the said quotation. In fact SR writes अत्र श्रीमति सुन्दरे भागवते परमो धर्मो निरूप्यते etc. and after about 7 or 8 lines he continues वास्तवं परमार्थभूतं etc.

2 The reference as 1.1 here seems to be made by JG himself and the reference as 1. 1. 2 immediately following the verse वेद्यं वास्तवमत्र वस्तु was perhaps later on recorded by the editors. There being the detailed reference as 1. 1. 2 the subsequent reference as 1. 1 is unnecessary and redundant too. In deference to JG in SS (cf. f. n. 6, P. 64) we have not deleted the reference 1. 1 here and in some subsequent paragraphs (e. g. para. 51, 52).

3 B & C read विभूतिकथेत्यर्थः which is most probably a corrupt form of the reading adopted here.

अथ किंरूपं तद्वस्तुतत्त्वमित्यत्राह—वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्[1] (भा: १।२।११) इति । ज्ञानं चिदेकरूपम्[2]।

---

1 The next line of this famous śloka is—ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ SR's commentary of this śloka will be helpful for understanding its significance. "ननु तत्त्वजिज्ञासा नाम धर्मजिज्ञासैव धर्म एव हि तत्त्वमिति केचित् ? तत्राह वदन्तीति—तत्त्वविदस्तु तदेव तत्त्वं वदन्ति । किं तत् ? यज् ज्ञानं नाम । अद्वयमिति क्षणिकविज्ञानपक्षं व्यावर्तयति । ननु तत्त्वविदोऽपि विगीतवचना एव ? मैवं तस्यैव तत्त्वस्य नामान्तरैरभिधानादित्याह । औपनिषदैर्ब्रह्मेति, हैरण्यगर्भैः परमात्मेति, सात्वतैर्भगवानिति शब्द्यतेऽभिधीयते ।"

2 The word '*jñāna*' has been explained by JG as चिदेकरूपम्, which has been commented upon by RG as स्वस्वरूपभूतज्ञानवदित्यर्थः. Knowledge is the nature of *Bhagavān* and at the same time it (knowledge) is His attribute also. Is this *jñāna*, the attribute (dharma), distinct from *Bhagavān* ? The Vaiṣṇavas answer in the negative. Again *Brahman or Bhagavān* is referred to in the *śruti* as विज्ञानमानन्दं ब्रह्म (बृ० उ० ३।९।२८) and 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० उ० २।१). Is *Brahman*, who is सत्य, ज्ञान, अनन्त and आनन्द, different from the attributes सत्यत्व, ज्ञानत्व, अनन्तत्व and आनन्दत्व ? The answer of the Vaiṣṇavas is that these attributes of *Brahman* cannot be different from *Brahman* since there is express mention in the *śruti* of the absence of all differences in *Brahman*. Śruti holds—एकधैवानुद्रष्टव्यम् (बृ० उ० ४।४।२०), नेह नानास्ति किञ्चन (कठ० उ० २।१।११ ) etc. How can this so-called difference between the object and its attributes be accounted for ? Should we accept *māyā* and explain this difference as the achievements of *māyā* ?

To this the Vaiṣṇavas urge that *Brahman* possesses a special power by virtue of which It maintains Its unity

and appears as many. This power is technically known as विशेष. When there is absence of difference but the function of difference is perceived, in such cases a representative of difference must be admitted. This representative of difference ( भेद-प्रतिनिधि ) is called विशेष . Whenever we say—Time is always present, we assume that time is *in* time and a distinctive usage is proved although we would not accept such distinction. Again in spite of the usage 'Existence is existent' we cannot admit difference in existence. Such usages can be explained only by requisitioning *viśeṣa*. ( cf. "विशेषश्च भेदप्रतिनिधिर्भेदाभावेऽपि तत्कार्यं प्रत्याययन् दृष्टः ; सत्ता सती, भेदो भिन्नः, कालः सर्वदास्तीत्यादौ । तमन्तरा विशेषणविशेष्यभावादिकं न सम्भवेत् ।"—वेदान्तस्यमन्तक, २३ पृः ) ।

The adversaries of the Vaiṣṇavas here object to the postulation of *Viśeṣa* inasmuch as by an admittance of a peculiar individuality ( स्वभाव ) of objects the problem may be solved. One may hold that the peculiar individuality of time makes it appear as both 'time' and 'in time' ; similarly by peculiar individuality existence appears as both 'existence' and 'existent'. But the Vaiṣṇavas being least perturbed answer that the opponents have unknowingly accepted what they (Vaiṣṇavas) seek to establish. If स्वभाव can generate a distinctive usage in spite of the absence of difference ( भेद ), then this स्वभाव is to be known as भेदप्रतिनिधि and consequently as विशेष . The same doctrine of विशेष has been accepted by the opponents only under a cover of separate name. ( cf. "न च सत्तादेः सत्ताद्यन्तराभावेऽपि स्वभावादेव सतीत्यादि-व्यवहारस्तस्यैवेह तच्छब्देनोक्तेः । तस्माद्भिन्नभेदेऽपि हरौ भेदप्रतिनिधिः सोऽभ्युपेयः ।"—वेदान्तस्यमन्तक, २४ पृः ) ।

It may be mentioned in this connection that this *Viśeṣa* is known in Vaiṣṇava philosophy in some other names as शक्ति, अचिन्त्यशक्ति, गुण etc.

अद्वयत्वञ्चास्य स्वयंसिद्धतादृशातादृशतत्त्वान्तराभावात्[1], स्वशक्त्येकसहायत्वात्, परमाश्रयं तं विना तासामसिद्धत्वाच्च ।

---

1 The entire series of arguments of the Vaiṣṇavas as flung against the Advaitins becomes totally ineffective if they (Vaiṣṇavas) cannot explain the word अद्वय properly. Whereas the Advaitins admit only one Reality without a second, the Vaiṣṇavas postulate five realities viz. *Īśvara, jīva, prakṛti, Kālá* and *Karman* and still hold that they are votaries of non-dualism (*advayavāda*). So the Vaiṣṇava stand-point clinches on the explanation of the term *advaya*. Hence it is interpreted with sufficient care and seriousness. *Īśvara* is held to be non-dual due to the absence of any similar or dissimilar self-determined reality. Although in Vaiṣṇava tenet there are four other realities (तत्त्व ) than *Īśvara*, still the admission of them does not militate against the doctrine of non-duality. *Jīva* being conscious is a similar reality ( तादृशतत्त्व ) and the three others being unconscious are dissimilar realities ( अतादृशतत्त्व ). But *Īśvara* only is स्वयंसिद्ध (self-determined) and everything else viz., *jīva, prakṛti, Kāla* and *Karman* is determined by *Īśvara*. These are the various powers located in *Īśvara*. Iśvara, as has been mentioned earlier in P. 65, is the locus of His powers viz. अन्तरङ्गा (esoteric), बहिरङ्गा (exoteric) and तटस्था (indifferent). *Māyā* is the exoteric power which finds expression as *Kāla, Karman* and *prakṛti* and *jīva* is His indifferent power. Thus the four other realities which are the manifestations of the power of *Īśvara* are not self-determined but dependent on *Īśvara*, due to their existence in *Īśvara*, the locus. Under these circumstances the Vaiṣṇavas may safely conclude that there is no self-determined reality, either similar or dissimilar, other than the one viz. *Īśvara* and it is in this acceptation that the Vaiṣṇavas claim the invulnerability of their doctrine of non-duality.

RG reads स्वतःसिद्ध etc. in place of स्वयंसिद्ध etc. without affecting the implication in the least

'तत्त्वम्' इति परमपुरुषार्थताद्योतनया परमसुखरूपत्वं तस्य बोध्यते[1] । अतएव तस्य नित्यत्वञ्च दर्शितम् ॥१।२। श्रीसूतः ॥५१॥

---

1 It is revealed in the Upaniṣads that Brahman or *Bhagavān* is knowledge, happiness, truth and eternity. (Cf. विज्ञानमानन्दं ब्रह्म—बृ० उ० ३।९।२८, सत्यं ज्ञानमनन्तं ब्रह्म—तै० उ० २।१ ) But strangely enough in the above-quoted verse of BH the reality ( तत्त्व ) has been mentioned as knowledge only. The Vaiṣṇavas cope with the problem by urging that whenever knowledge is held to be the तत्त्व, it is clear that this knowledge is the essence ( सार ). Again essence is nothing else than happiness since in each and every course of action the essence lies in that which can bestow happiness. The word अद्वय in BH being explained as स्वयंसिद्ध etc., it follows that this reality must itself be स्वयंसिद्ध or uncaused i.e. eternal. In this way can there be a reconciliation of the BH and the Upaniṣadic expressions.

It must not be forgotten here that although these knowledge, happiness etc. are held to be the nature of *Īśvara*, they are equally the attributes also of *Īśvara*. The special purpose of this *śāstra* is to demonstrate the difference of Ātman from knowledge and happiness. From our everyday experience as '*jānāmi*' we know that Ātman is the object which possesses the attribute knowledge and similarly through the experience 'I am happy' the object-attribute relation between Ātman and happiness is established. Further, these two experiences do not concur with each other, but they differ in character. In this way the words ज्ञान, आनन्द etc. of the Upaniṣads really signify ज्ञानवत् and आनन्दवत्. Cf."न च तज्ज्ञानसुखयोरैक्यं वास्तवं जानामीत्यनुव्यवसायसिद्धज्ञानस्यात्मधर्मस्य, अहं सुखीत्यनुभवसिद्धात्मधर्मसुखस्य च मिथो वैलक्षण्यावगमात् ।.......ब्रह्मपदज्ञानपदानन्दपदानां सामानाधिकरण्यानुपपत्त्या ज्ञानपदानन्दपदयोः स्वाभाविकज्ञानवत्स्वाभाविकानन्दवत्-परत्वावगमात् ।"—RG.

श्रीबलदेवविद्याभूषणकृता टीका ।

स्वरूपनिर्देशपूर्वकं तत्त्वं वक्तुमवतारयति—अथ किमिति। स्वयंसिद्धेति—आत्मनैव सिद्धं खलु स्वयंसिद्धमुच्यते। "स्वयंदासास्तपस्विनः" इत्यत्र तपस्विदास्यमात्मना तपस्विनैव सिद्धं प्रतीयते, तद्वत्। तादृशञ्च परेशवस्त्वेव, न तु तादृशमपि जीवचैतन्यं, न स्वतादृशं प्रकृतिकाललक्षणं जडवस्तु; तदभावादद्वयत्वम्। तयोः स्वयंसिद्धत्वाभावः कुतः? इत्यत्राह परमाश्रयं तं विनेति। स्वशक्त्येकसहायेऽप्यद्वयपदं प्रयुज्यते—'धनुर्द्वितीयः पाण्डुः' इति।

ननु वेदान्ते 'विज्ञानमानन्दं ब्रह्म' इति, विज्ञानानन्दस्वरूपं ब्रह्म पठ्यते, इह ज्ञानमिति कथम्? तत्राह—तत्त्वमिति। इदमत्र तत्त्वमित्युक्ते सारे वस्तुनि तत्त्वशब्दो नीयते। सारञ्च सुखमेव, सर्वेषामुपायानां तदर्थत्वात्, तथा च सुखरूपत्वमपि तस्यागतम्। ननु ज्ञानं सुखञ्चानित्यं दृष्टं तत्राह—अतएवेति। स्वयंसिद्धत्वेन व्याख्यानान्नित्यं तदित्यर्थः। 'सदकारणं यत्तन्नित्यम्' इति हि तीर्थकाराः। एवञ्च तादृशब्रह्मसम्बन्धीदं शास्त्रमित्युक्तम् ॥५१॥

ननु नीलपीताद्याकारं क्षणिकमेव ज्ञानं दृष्टं, तत् पुनरद्वयं नित्यं ज्ञानं कथं लक्ष्यते. यन्निष्ठमिदं शास्त्रम्[1] ?

---

1. In the previous paragraph it has been established that knowledge is non-dual and eternal. To this the opponents raise a problem that our experience proves the transitoriness ( क्षणिकत्व ) of each and every knowledge. How can then this knowledge, the reality ( तत्त्व ), be acknowledged to be eternal ? In reply to this contention of the antagonists JG has referred to the testimony of BH and the Upaniṣads. Reasons may well be advanced in support of the scriptural evidences. The most convincing of the arguments is that self (*Ātman*) being transitory there cannot be enjoyment of any sort. A person, who desires some enjoyment, has to have recourse to the means and then he can enjoy the desired object. So the enjoyer (self) must persist during the span of time required for resorting to means and finally for drawing the enjoyment. Had he been transitory, the enjoyment could not have taken place. Further, in the event of the

इत्यत्राह[1]—सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम् । वस्त्वद्वितीयं तन्निष्ठम्" (भा० १२।१३।१२) इति "सत्यं ज्ञानमनन्तं ब्रह्म" ( तैः उः २।१।१ ) इति यस्य स्वरूपमुक्तम्, "येनाश्रुतं श्रुतं भवति" ( छाः उः ६।१।३ ) इति यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातं, "सदेव सौम्येदमग्र आसीत्" ( छाः उः ६।२।१ ) इत्यादिना निखिलजगदेककारणता, "तदैक्षत बहु स्याम्" (छाः उः ६।२। ३) इत्यनेन सत्यसङ्कल्पता च यस्य प्रतिपादिता, तेन ब्रह्मणा स्वरूपशक्तिभ्यां[2] सर्ववृहत्तमेन सार्धम्[3], "अनेन जीवेनात्मना" (छाः उः ६।३।२) इति तदीयोक्ताविदन्तानिर्देशेन[4] ततो भिन्नत्वेऽप्यात्मतानिर्देशेन तदात्मांशविशेषत्वेन लब्धस्य बादरायणसमाधिदृष्टयुक्तेरत्यभिन्नतारहितस्य[5] जीवात्मनो यदेकत्वं "तत्त्वमसि" ( छाः उः ६।८।७ ) इत्यादौ जात्या[6] तदंशभूतचिद्रूपत्वेन समानाकारता, तदेव लक्षणं प्रथमतो ज्ञाने

---

admission of the so-called transitoriness of self the guilty will not be punished because at the time of punishment the guilty is non-existent ; on the other hand, the person who receives the punishment did not commit any guilt since he did not exist at all at that time. Thus the moral, religious or statutory law is rendered meaningless if such a doctrine is admitted.

1 RG reads इत्याह.

2 "स्वरूपं ज्ञानसुखादि, शक्तिर्जगदुपादानमायादि, ताभ्याम् ।" —RG.

3 "सार्धमित्यस्य यदेकत्वमिति परेणान्वयः ।"—RG.

4 " 'अनेन' इति 'इदं'-पदेनापरोक्षत्वनिर्देशेन"—RG.

5 v. l. अत्यन्ताभिन्नतारहितस्य ।

6 Although A reads ज्ञाता and that is supported by RG, it conveys no good sense. The Advaitins establish total identity of *jiva* and *Brahman* and this *śruti* viz. तत्त्वमसि is referred to by them as the trump card. Literally it means 'Thou art that'. But the Vaiṣṇavas with a view to maintaining consistency with many other scriptural evidences explain this *śruti* in the following manner. There is no doubt that both

साधकतमं यस्य तथाभूतं यत् सर्ववेदान्तसारमद्वितीयं वस्तु तन्निष्टं तदेकविषयमिदं श्रीभागवतमिति प्राक्तनपद्यस्थेनानुषङ्गः[1]। यथा[2] जन्मप्रभृति कश्चिद् गृहगुहावरुद्धः सूर्यं विविदिषुः कथञ्चिद् गवाक्षपतितं सूर्यांशुकणं दर्शयित्वा केनचिदुपदिश्यते एष स इति, एतत्तदंशज्योतिःसमानाकारतया तन्महाज्योतिर्मण्डलमनुसन्धीयता[3]मित्यर्थस्तद्वत् । जीवस्य तथा तदंशत्वञ्च

---

*jīva* and *Īśvara* are conscious and that the former is a part of the latter. The identity ( अभेद ) which is sought to be proved by the Advaitins on the strength of the word असि cannot be the only interpretation of this Upaniṣadic expression. According to the Vaiṣṇavas similarity of the two viz. *jīva* and *Īśvara* is purported to be expressed here, the similarity being inclusion into the same class, चिद्रूपत्व. Cf. "जीवस्य चिद्रूपत्वेन जात्या यद् ब्रह्मसमानाकारत्वं तदेव तस्य ब्रह्मणा सहैक्यमिति व्यक्तिभेदः प्रस्फुटः ।—BD.

1 This śloka is to be construed with the word श्रीभागवतम् occuring in BH 12. 13. 9.

2 As the person remaining since his birth in a dark place does not know what the sun is and is sometimes instructed by another person to know the feeble sun-ray coming through a hole to be the sun and is further advised to find out the real sun so also the ignorant man, who himself is conscious but has not been fortunate enough to know the Supremely Conscious *Īśvara*, is instructed by *śruti* to know atmoic consciousness (अणुचैतन्य ) viz. *jīva* ( त्वम् ) to be *Īśvara* ( तत् ) and is further advised to learn the real nature of *Īśvara*.

3 RG reads अनुसन्धीयते. He also suggests the alternative meaning of the word as अनुमीयते. The two inferences are shown in the following manner—

तच्छक्ति[1]विशेषसिद्धत्वेनैव परमात्मसन्दर्भे[2] स्थापयिष्यामः । तदेतज्जीवादिलक्षणांशविशिष्टतयैवोपनिषदस्तस्य सांशत्वमपि क्वचिदुपदिशन्ति । निरंशत्वोपदेशिका श्रुतिस्तु केवलतन्निष्ठा[3] । अत्र

---

(i) सूर्य एतत् सदृशमहाज्योतिर्मण्डलरूपः,
एतदंशित्वे सति ज्योतिर्मयत्वात् ।
(ii) ब्रह्म निरतिशयचेतनम्, त्वंपदवाच्यत्वांशित्वे सति चेतनत्वात् ।

1 RG reads तदचिन्त्यशक्ति etc.

2 See Introduction.

3 It is true that *Īśvara* is sometimes mentioned as having parts and sometimes as partless. JG is conscious about the paucity of the Upaniṣadic expressions where *Īśvara* is referred to as having parts ( सांश ). So he uses the word क्वचित् (rarely). We may cite here from Ch. U. the following *śruti*——पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ( ३।१२।६ ). The Advaitins, who never acknowledge any part of Brahman, are in a quandary and somehow explain away by maintaining that in such cases *śruti* expresses in the manner the student has been accustomed to think due to his eternal habit of mind. Cf.

निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ।
तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतुर्हितैषिणी ॥

The Vaiṣṇavas again are confronted with a difficult situation when *śruti* instructs in Brahman as having no part at all. For example, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ( श्वे० उ० ६।१९ ) may be mentioned. Such expressions are interpreted by the Vaiṣṇavas in a constrained manner. It is urged that in such cases *Brahman* has been referred to by being bereft of Its attributes. ( केवलतन्निष्ठा विशेष्यमात्रपरेत्यर्थः —BD).

'कैवल्यैकप्रयोजनम्' इति चतुर्थपादश्च[1] कैवल्यपदस्य शुद्धत्वमात्र-वचनत्वेन, शुद्धत्वस्य च शुद्धभक्तित्वेन पर्यवसानेन[2] प्रीतिसन्दर्भे[3] व्याख्यास्यते । १२।१३। श्रीसूतः ॥५२॥

श्रीबलदेवविद्याभूषणकृता टीका ।

आर्थिकं नित्यत्वं स्थिरं कुर्वन्, शास्त्रस्य विशिष्टब्रह्मसम्बन्धित्वमाह— ननु नीलेत्यादिना । 'अनेन' जीवेनेत्यादि । तदीयोक्तौ परदेवतावाक्ये । तदात्मांशविशेषत्वेन तद्विभिन्नांशत्वेन, ननु मत्स्यादिवत् स्वांशत्वेनेत्यर्थः । जीवात्मनो यदेकत्वमिति—जीवस्य चिद्रूपत्वेन जात्या यद्ब्रह्मसमानाकारत्वं तदेव तस्य ब्रह्मणा सहैक्यमिति व्यक्तिभेदः प्रस्फुटः । एवमेव यथेत्यादिदृष्टान्तेनापि दर्शितः । तदेतदिति—उपनिषदः "सोऽकामयत बहु स्याम्" इत्याद्याः । निरंशत्वोपदेशिकेति "सत्यं ज्ञानमनन्तम्"—( तैः उः २।१) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।" (श्वेः उः ६।१९) इत्याद्या श्रुतिस्तु केवलतन्निष्ठा विशेष्यमात्रपरेत्यर्थः । अनभिव्यक्तसंस्थान-गुणकं ब्रह्म वक्तीति यावत् ॥५२॥

तत्र यदि त्वम्पदार्थस्य जीवात्मनो ज्ञानत्वं नित्यत्वञ्च प्रथमतो विचारगोचरः स्यात्तदैव तत्पदार्थस्य तादृशत्वं सुबोधं स्यादिति[4] तद्बोधयितुम् "अन्यार्थश्च परामर्शः"[5] (ब्र० सू० १।३।२०) इति न्यायेन जीवात्मनस्तद्रूपत्वमाह ।

---

1 The fourth quarter of the already referred to śloka of BH (12. 13. 12).

2 Although the word *Kaivalya* generally means *mokṣa*, the author here takes it in the sense of śuddha-bhakti (pure devotion).

3 See Introduction.

4 A study of the nature of त्वम् i.e. जीव will be considerably helpful for the study of तत् i.e. *Paramātman* because both are consciousness and eternal. By तत् and त्वम् the author JG evidently refers to the *śruti* तत्त्वमसि (छा० उ० ६।८।७)

5 Although RG reads परामर्षः and glosses 'परामृश्यत इति व्युत्पत्त्या परामर्शविषयः, निरूपणविषय इति यावत्', the reading of the text of TS should be परामर्शः

'नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद्व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥
(भा० ११।३।३८)

[1]आत्मा शुद्धो जीवः, न जजान न जातः, जन्माभावादेव तदनन्तरास्तिता[2]लक्षणो विकारोऽपि नास्ति । नैधते न वर्धते, वृद्धयभावादेव विपरिणामोऽपि निरस्तः । हि यस्मात् । व्यभिचारिणामागमापायिनां बाल्युवादिदेहानां देवमनुष्याद्याकारदेहानां वा ।

---

since in *Brahmasūtra* it is so read and commented. In the *Govindabhāṣya* of this *sūtra* BD has been very brief but in the commentary of this paragraph he dwells upon this *sūtra* rather elaborately. This *sūtra* is a constituent of the most famous दहराधिकरण where the import of the śruti 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म etc. ( छा० उ० ८।१।१ ) is determined. In the context of *Paramātman*, who is endowed with the eight qualities viz. being free from all sins ( अपहतपाप्मत्व ) etc., *jīva* has been referred to as 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय etc. ( छा० उ० ८।३।४ ). This gives rise to the problem—why should *jīva* be referred to in the context of *Paramātman* ? The answer is that *jīva* attains the exalted status of being endowed with the eight venerable qualities when he attains *Paramātman*. Thus the reference of *jīva* culminates in an indirect reference to *Paramātman*.

1 Herefrom the rest of this paragraph is virtually a reproduction of SR's commentary of BH 13.3.38. There are some negligible variations.

2 RG reads अस्तित्व but we are not prone to attach any importance to this reading since SR vouches for the reading अस्तिता.

सवनवित्[1] तत्तत्कालद्रष्टा । नह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः । निरवस्थः कोऽसावात्मा ? अत आह, उपलब्धिमात्रं ज्ञानैकरूपम्[2] । कथम्भूतम् ? सर्वत्र देहे, शश्वत् सर्वदा, अनुवर्तमानमिति । ननु नीलज्ञानं नष्टं पीतज्ञानं जातमिति प्रतीतेर्न ज्ञानस्यानपायित्वम् । तत्राह—इन्द्रियबलेनेति । सदेव ज्ञानमेकमिन्द्रियबलेन विविधं कल्पितम् । नीलाद्याकारा वृत्तय एव जायन्ते नश्यन्ति च, न ज्ञानमिति भावः ।

[3]अयमागमापायितदवधिभेदेन प्रथमस्तर्कः ।[4] द्रष्टृदृश्यभेदेन

---

1 In Vedic Sanskrit सवन means 'pressing of *soma*'. This ceremony occurs thrice a day—morning, midday and evening. Thus the word *savana* comes to signify time.

2 *Ātman* who experiences the different stages and forms of a human being cannot be included in those stages or forms. Thus the question is asked—What is then the exact nature of *ātman* ? It is held that knowledge is *ātman* (*jīva*).

3 The opponents may argue that experience shows the transitoriness of knowledges since it is held that one knowledge is destroyed and, another is born. To this it may be maintained that individual cognitions of particular objects may grow or disappear but Knowledge itself is always present, be it of a jar or of a book or of anything else.

4 Relevantly JG points out the two arguments for the establishment of the difference between the body ( देह ) etc. and self ( आत्मन् ). After these two arguments he resumes the explanation of the *śloka* of BH.

The reading, as it stands now in all the available editions, is definitely corrupt. A similar expression is to be found in a verse in para. 55 where also the same mistake has been repeated. Even the commentary thereon by BD has been tampered with by some smatterer. The only

clue for the rescue from this situation is the commentary by RG under para. 53 where RG says—देहस्यागमापायधर्मः, आत्मनश्च तद्बाधस्तदभाव इति. Fortunately this manuscript containing the commentary of RG did not come in the hands of such a dilettante and did not suffer from a 'milk-cow emendation'. On the strength of this commentary the humble editor suggests that the reading of this line of TS will be—अयमागमापाय-तद्बाधभेदेन प्रथमस्तर्कः and that of the second hemistich of the *śloka* of para. 55 will be आगमापायतद्बाधभेदेन प्रथमो मतः. Likewise the commentary thereon by BD should read as तद्बाधत्वात्, तद्द्रष्टृत्वात् etc. The validity of our reading will be further demonstrated by the fact that the suggested reading fulfils the requirement of an *anuṣṭup* whereas the existing reading violates it by an excess of one syllable. Perhaps the आकार sign in Bengali was a bit raised in some manuscript and it looked like इकार sign. Then the intelligent ( ! ) scribe mooted the हलन्त्य sign of द् as a mere careless stroke of pen. Thus he safely wrote तदवधि etc. Of course, one more mistake was committed unwillingly and unnoticed by the same scribe as the बकार of बाध was changed to वकार of अवधि. But in a manuscript written in Bengali character these two ( व & ब ) have a common device for writing.

As the line cannot be interpreted in the existing reading, it is being explained in the suggested one. The body is changing in different stages from childhood to infirmity; it has origin and destruction but self is permanent and undergoes no change; it has neither beginning nor end. BD also has indicated this interpretation, and consequently this suggested reading, in the following manner—"ते भावविकाराः षट् षड्विधास्ते जीवस्य न सन्तीति समुदायार्थः".

द्वितीयोऽपि तर्को ज्ञेयः ।[1]

व्यभिचारिष्ववस्थितस्याऽव्यभिचारे दृष्टान्तः प्राणो यथेति[2] ॥ ५३॥

श्रीबलदेवविद्याभूषणकृता टीका ।

जीवात्मनि ज्ञाते परमात्मा सुज्ञातः स्यादित्युक्तं, तदर्थं जीवात्मानं निरूपयिष्यन्नवतारयति—तत्र यदीत्यादिना । अन्यार्थश्चेति ब्रह्मसूत्रम । दहरविद्या छान्दोग्ये पठ्यते—"यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्"—(छा० उ० ८।१।१) इति । अत्रोपासकस्य शरीरं ब्रह्मपुरम्, तत्र हृत्पुण्डरीकस्थो दहरः परमात्मा ध्येयः कथ्यते, तत्रापहतपाप्मत्वादिगुणाष्टक[3]मन्वेष्टव्यमुपदिश्यत इति सिद्धान्तितम् । तद्वाक्यमध्ये "स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः" ( छा: उ: ८।१२।३ )[4] इति वाक्यं पठितम् । अत्र सम्प्रसादो लब्धविज्ञानो जीवस्तेन यत् परं ज्योतिरुपपन्नं स एव पुरुषोत्तम इत्यर्थः । दहरवाक्यान्तराले जीवपरामर्शः किमर्थमिति चेत्तत्राह, अन्यार्थ इति । तत्र जीवपरामर्शोऽन्यार्थः । यं प्राप्य

1 The second argument in support of the distinction between body and self is that self is the knower and body is the known.

2 Although *prāṇa* is said to be five in number, it is in fact one since one Vitality has been manifested through the different actions which are given the different appellations as प्राण, अपान, समान, उदान & व्यान. Another interpretation follows in the next paragraph.

3 We quote here the relevant śruti for the enumeration of the eight qualities—एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः (छा० उ० ८।१।५).

4 We do not know of any recension of Ch. U. where this quotation is found without any divagation. The extant edition of Ch. U. reads एवमेवैष etc., and not स एष etc.

जीवः स्वस्वरूपेणाभिनिष्पद्यते स परमात्मेति, परमात्मज्ञानार्थं इत्यर्थः। न जजानेति—जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति[1] च इति भावविकाराः षट् पठिताः, ते जीवस्य न सन्ति इति समुदायार्थः। ननु नीलज्ञानमित्यादि ज्ञानरूपमात्मवस्तु ज्ञातृ भवति, प्रकाशवस्तु सूर्यः प्रकाशयिता यथा। ततश्च स्वरूपानुबन्धित्वाज्ज्ञानं तस्य नित्यं, तस्येन्द्रियप्रणाल्या नीलादिनिष्ठा या विषयता वृत्तिपदवाच्या,[2] सैव नीलाद्यपगमे नश्यतीति ॥५३॥

दृष्टान्तं विवृण्वन्निन्द्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति—

अण्डेषु पेशिषु तरुष्वविनिश्चितेषु
प्राणो हि जीवमुपधावति तत्र तत्र ।[3]

---

1 Cf. "षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति।" ( निरुक्त, १।२ )

2 The mention of इन्द्रिय definitely refers to प्रत्यक्षवृत्ति and the method of the origination of this प्रत्यक्षवृत्ति has been dealt with here briefly. For the perception of an external object there must be some relation between the knower (*ātman*) and the known (object). This relation or contact is established by *manas* which comes out through the passage ( प्रणाली ) of the sense-organ and pervades the object. *Manas* being a bright ray-like substance can come out and take the form of the object. This metamorphosis of *manas* is called वृत्ति. The duration of a knowledge depends on the persistence of this *vṛtti*. The so-called destruction of knowledge is the non-continuity of this *vṛtti*.

Strangely enough we find editions where प्रणाल्या is read as प्रमाणाल्या !

3 In all sorts of living beings there is the same vital force which shows that *prāṇa* is without any change.

सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते
कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥
(भा: ११।३।३६)

[1]अण्डेषु--अण्डजेषु । पेशिषु—जरायुजेषु । तरुषु—उद्भिज्जेषु । अविनिश्चितेषु—स्वेदजेषु । उपधावति--अनुवर्तते । एवं दृष्टान्ते निर्विकारत्वं प्रदर्श्य दार्ष्टान्तिकेऽपि दर्शयति । कथम् ? तदैवात्मा सविकार इव प्रतीयते यदा[2] जागरे इन्द्रियगणः, यदा च स्वप्ने तत्संस्कारवानहङ्कारः, यदा तु प्रसुप्तं[3] तदा तस्मिन् प्रसुप्त इन्द्रियगणे सन्ने लीने, 'अहमि' अहङ्कारे च सन्ने लीने, कूटस्थो निर्विकार एवात्मा । कुतः ? आशयमृते लिङ्गशरीरमुपाधिं विना, विकारहेतोरुपाधेरभावात् इत्यर्थः ।[4] नन्वहङ्कारपर्यन्तस्य सर्वस्य लये

---

1 As in the previous paragraph here also the explanation of the śloka of BH (11. 3. 39) is almost the same as the commentary of SR.

2 The word यदा appears here as an interpretation of यत occuring in the śloka of BH.

3 There are three stages of human existence—जाग्रत् (awoken), स्वप्न (asleep but dreaming) and सुषुप्ति (asleep without dream). In the first stage the sense-organs and the mind remain active, in the second stage only mind remains active while in the third neither the sense-organ nor the mind functions.

4 In sound sleep i.e. सुषुप्ति there is no chance of any change ( विकार ) since both the gross ( स्थूल ) and psychical ( सूक्ष्म or लिङ्गशरीर ) bodies become inactive. The word कूटस्थ stands for 'unchanging' like the anvil ( कूटवत् अपरिणामितया स्थितः ). The object as red-hot iron is placed on the anvil and given the desired form by a hammer. The anvil effects the change of the iron but itself remains unchanged. Similarly self being the locus of the worldly objects effects the change in those objects but itself suffers from no change.

शून्यमेवावशिष्यते, क्व तदा कूटस्थ आत्मा ? अत आह— तदनुस्मृतिर्नः, तस्याखण्डात्मनः सुषुप्तिसाक्षिणः स्मृतिः 'नः' अस्माकं जाग्रद्द्रष्टॄणां जायते "एतावन्तं कालं सुखमहमस्वाप्सं, न किञ्चिदवेदिषम्" इति । अतोऽननुभूतस्य तस्यास्मरणादस्त्येव सुषुप्तौ तादृगात्मानुभवः, विषयसम्बन्धाभावाच्च न स्पष्ट इति भावः[1] । अतः स्वप्रकाशमात्रवस्तुनः सूर्यादेः प्रकाशवदुपलब्धिमात्रस्याप्यात्मन उपलब्धिः स्वाश्रयेऽस्त्येवेत्यायातम् ।[2] तथा च श्रुतिः—"यद्वै तन्न पश्यति पश्यन् वै द्रष्टव्यान्न[3] पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृ० उ० ४।३।२३) इति ।[4]

---

1 The existence of self during dreamless sleep ( सुषुप्ति ) may be proved by the subsequent memory of happiness during sleep. Had there been no perception of happiness, there could not have originated the memory. Memory of something is possible only when the object was previously cognised. The perception of self is not so prominent due to the absence of any object which self knows. Thus the stage of *suṣupti* is not to be thought of as a complete void ( शून्य).

2 As it has been maintained earlier (in para. 53), Ātman is of the nature of Knowledge only ( उपलब्धिमात्रम् ). But as opposed to the Advaita doctrine Brahman or Ātman is not Pure Knowledge but knower also. The problem is grappled with by the Vaiṣṇavas by holding hat Ātman is both knowledge and knower just as the sun is tboth illumination and illuminator. For details see P. 75, f. n. 2.

3 This śruti, as quoted here, varies from the available text of Bṛ. U. 4. 3. 23 where in place of द्रष्टव्यान्न it is read तन्न.

4 Here this śruti is referred to with a view to showing that *Ātman* is really a knower but it is often spoken of as knowledge only for the absence of the known. In sound sleep *Ātman* is revealed as knowledge because of the absence of the external objects ; but Its nature of being a knower is not at all non-existent. Cf. BD's commentary.

अयं साक्षि-साक्ष्यविभागेन तृतीयस्तर्कः[1] । दुःखिप्रेमास्पदत्वविभागेन चतुर्थोऽपि तर्कोऽवगन्तव्यः ॥५५॥

श्रीबलदेवविद्याभूषणकृता टीका ।

दृष्टान्तमिति—प्राणस्य नानादेहेष्वैकरूप्यान्निर्विकारत्वमित्यर्थः । तस्मिन्नात्मनि । उपाधेर्लिङ्गशरीरस्य, अभावाद् विश्लेषादित्यर्थः । तदाप्यतिसूक्ष्माया वासनायाः सत्त्वान्मुक्तेरभाव इति ज्ञेयम् । प्राकृताहङ्कारे लीनेऽपि स्वरूपानुबन्धिनोऽहमर्थस्य सत्त्वात्तेन "सुखमहमस्वाप्सम्" इति विमर्शो भवतीति प्रतिपादयितुमाह—नन्वित्यादि । शून्यमेवेति—अहंप्रत्ययं विनात्मनोऽप्रतीतेरिति भावः । अखण्डात्मन इति—अणुरूपत्वाद्विभागानर्हस्येत्यर्थः । ननु स्वापादुत्थितस्यात्मनोऽहङ्कारेण योगात् 'सुखमहमस्वाप्सम्' इति विमर्शो जागरे सिध्यति, सुषुप्तौ तु चिन्मात्रः स इति चेत्तत्राह—अतोऽननुभूतस्येति । अनुभवस्मरणयोः सामानाधिकरण्यादित्यर्थः । तस्मात्त-

---

1 The third argument for the establishment of the distinction between body etc. and self is indicated here, in addition to the two already mentioned. Self is the witness (साक्षी) of the events viz. body ( देह ) etc. Thus there is a wide gulf of difference between these two as the one remaining between subject and object ( कर्तृकर्मविरोध ).

The word साक्षी is a bit difficult. A person is called साक्षी (witness) when he experiences an event directly but does not learn it from somebody else. (Cf. साक्षाद् द्रष्टरि संज्ञायाम् — Pāṇini Sū. 5.2.91) So whenever any phenomenon is known by self without the help of any means or instrument or any sense-organ, this knower is called साक्षी. Nobody requires any instrument for the perception or revelation of his own body. That is why self is साक्षी and the body is साक्ष्य.

2 Body is an abode of sorrow but Ātman is an object of happiness. Nobody has ever been found to be without any love for self. That body is full of sorrow is a point which requires no clarification.

स्यामप्यनुभवितैवात्मेति सिद्धम्। ननूपलब्धिमात्रमित्युक्तम्, तस्योपलब्धृत्वं कथम्? तत्राह – अत इत्यादि। 'यद्वै' इति—तदात्मचैतन्यं कर्तृ, सुषुप्तौ न पश्यतीति यदुच्यते तत् खलु द्रष्टव्यविषयाभावादेव, न तु द्रष्टृत्वाभावादित्यर्थः। स्फुटमन्यत् ॥५४॥

तदुक्तम्—

अन्वयव्यतिरेकाख्यस्तर्कः स्याच्चतुरात्मकः।
आगमापायितदवधिभेदेन[1] प्रथमो मतः॥
द्रष्टृदृश्यविभागेन द्वितीयोऽपि मतस्तथा।
साक्षिसाक्ष्यविभागेन तृतीयः सम्मतः सताम्॥
दुःखिप्रेमास्पदत्वेन चतुर्थः सुखबोधकः।११।३।[2]

इति श्रीपिप्पलायनो निमिम् ॥५५॥

श्रीबलदेवविद्याभूषणकृता टीका।

पद्ययोर्व्याख्याने चत्वारस्तर्का योजितास्तानभियुक्तोक्ताभ्यां सार्धकारिकाभ्यां निर्दिशति—अन्वयेति। तर्कशब्देन तर्काङ्गकमनुमानं बोध्यम्। आगमापायिनो दृश्यात् साक्ष्याद्[3] दुःखास्पदाच्च देहादेरात्मा भिद्यते। तदवधित्वात्[4], तद्द्रष्टृत्वात्, तत्साक्षित्वात्, प्रेमास्पदत्वाच्चेति क्रमेण हेतवो नेयाः। व्यतिरेकश्चोह्यः॥५५॥

एवम्भूतानां जीवानां चिन्मात्रं यत् स्वरूपं तयैवाकृत्या तदंशित्वेन च तदभिन्नं यत् तत्त्वं तदत्र वाच्यमिति व्यष्टिनिर्देश-

---

1 The reading should be आगमापायतद्वाधभेदेन. For discussion see Pp. 125-26.

2 Here ends the explanation of the ślokas of BH (11. 3. 38-39).

3 All the editions read साक्षाद् which is meaningless. It should be साक्ष्याद् as opposed to तत्साक्षित्वात् in the next sentence.

4 The correct reading is तद्बाधत्वात्. For discussion see Pp. 125-26.

द्वारा प्रोक्तम् । तदेव ह्याश्रयसंज्ञकम् महापुराणलक्षणरूपैः सर्गादिभिरर्थैः समष्टिनिर्देश[1]द्वारापि लक्ष्यते[2] इत्यत्राह द्वाभ्याम्—

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ॥
( भा० २।१०।१-२ )

मन्वन्तराणि चेशानुकथाश्च मन्वन्तरेशानुकथाः । अत्र सर्गादयो दशार्था लक्ष्यन्त इत्यर्थः । तत्र च दशमस्य विशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरूपं वर्णयन्ति[3] । नन्वत्र नैवं प्रतीयते ? अत आह—श्रुतेन श्रुत्या कण्ठोक्त्यैव स्तुत्यादिस्थानेषु, अञ्जसा साक्षाद् वर्णयन्ति, अर्थेन तात्पर्यवृत्त्या च तत्तदाख्यानेषु ॥५६॥

श्रीबलदेवविद्याभूषणकृता टीका ।

ईश्वरज्ञानार्थं जीवस्वरूपज्ञानं निर्णीतम् । अथ तत्सादृश्येनेश्वरस्वरूपं निर्णेतुं पूर्वोक्तं योजयति—एवम्भूतानामित्यादिना । चिन्मात्रं यत्

---

1 C drops the word निर्देश.

2 An understanding of the nature of *jīva* helps a lot in the proper appraisal of *Īśvara* since both of them belong to the same class viz. Conscious Being ( चेतन ). The other reason is that *jīva*, a part of *Īśvara*, being known helps in the knowledge of *Īśvara*, the whole. *Īśvara* or *Brahman* is called *āśraya* or locus of everything and this locus is ultimately propounded in a *Mahāpurāṇa* like the BH. Of the ten characteristics of a *Mahāpurāṇa* the tenth i.e. *āśraya* is indirectly propounded through the nine other characteristics.

3 JG follows SR almost to the letter. But here he drops one important line—एकस्यैव प्राधान्यान्नायं दोष इत्यर्थः.

स्वरूपमिति चेतयितृ चेति बोध्यं, पूर्वनिरूपणात्[1]। तयैवाकृत्येति--चिन्मात्रत्वे सति चेतयितृत्वं याकृतिर्जाति[2]स्तयेत्यर्थः। "आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि" इति मेदिनी। तदंशित्वेन जीवांशित्वेन चेत्यर्थः। तदभिन्नं जीवाभिन्नं यद् ब्रह्मतत्त्वम्। अंशः खल्वंशिनो न भिद्यते, पुरुषादिव दण्डिनो दण्डः। व्यष्टीति—समुदायः समष्टिः, तदेकदेशस्तु व्यष्टिरित्यर्थः। जीवादिशक्तिमद्ब्रह्म समष्टिः, जीवस्तु व्यष्टिः। तादृश-जीवनिरूपणद्वारा शास्त्रस्य ब्रह्मसम्बन्धित्वमुक्तम्। अथ जीवादिशक्तिविशिष्ट-समष्टिब्रह्मनिरूपणेन तस्य तथात्वं वक्तव्यमित्यर्थः। दशमस्य चेश्वरस्य। अवशिष्टः स्फुटार्थः ॥५६॥

तमेव[3] दशमं विस्पष्टयितुं तेषां दशानां व्युत्पादिकां सप्त-श्लोकी[4]माह--

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ (भा० २।१०।३)

भूतानि खादीनि, मात्राणि च शब्दादीनि, इन्द्रियाणि च। धी-शब्देन महदहङ्कारौ। गुणानां वैषम्यात् परिणामात्। ब्रह्मणः परमेश्वरात् कर्तुर्भूतादीनां जन्म सर्गः। पुरुषो वैराजो ब्रह्मा, तत्कृतः पौरुषश्चराचरसर्गो विसर्ग इत्यर्थः।

---

1 See para. 53, P. 128, com. by BD.

2 Here आकृति means जाति. In the Nyāyasūtra व्यक्त्याकृति-जातयस्तु पदार्थः (2.2.68) the word आकृति differs from जाति. But there are occasions when आकृति means जाति. Cf. यत्तर्हि तद् भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः? नेत्याह, आकृतिर्नाम सा। (महाभाष्य, पस्पशा, १६ पृ:)

3 C reads तदेवं.

4 The seven ślokas, BH 2.10. 3-9, have been quoted and explained here in the following two paragraphs.

स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ।
मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः ॥
अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ।
पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥

( भा० २।१०।४–५ )

वैकुण्ठस्य भगवतो विजयः सृष्टानां तत्तन्मर्यादापालनेनोत्कर्षः, स्थितिः स्थानम् । ततः स्थितेषु स्वभक्तेषु तस्यानुग्रहः पोषणम् । मन्वन्तराणि तत्तन्मन्वन्तरस्थितानां मन्वादीनां तदनुगृहीतानां सतां चरितानि, तान्येव धर्मस्तदुपासनाख्यः सद्धर्मः । तत्रैव स्थितौ नानाकर्मवासना ऊतयः[1] । स्थितावेव हरेरवतारानुचरितमस्यानुवर्तिनाञ्च कथा ईशानुकथाः प्रोक्ता इत्यर्थः ।

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ।
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ॥

( भा० २।१०।६ )

स्थित्यनन्तरञ्चात्मनो जीवस्य शक्तिभिः स्वोपाधिभिः सहास्य हरेरनुशयनं,[2] हरिशयनानुगतत्वेन शयनं निरोध इत्यर्थः । तत्र हरेः शयनं प्रपञ्चं प्रति दृष्टिनिमीलनं, जीवानां शयनं तत्र लय

---

1 SR evolves the meaning of ऊति from its derivation. "वेञ् तन्तुसन्ताने । ऊयन्ते कर्मभिः संतन्यन्त इत्यूतयः । यद्वा वृधपर्यात् संश्लेषार्थाद् वाऽवतेर्धातोरिदं रूपम् । ऊयन्ते कर्मभिर्बध्यन्ते संश्लिष्यन्त इति वोतय इत्यर्थः ।"

2 cf. "अस्यात्मनो जीवस्य हरेर्योगनिद्रामनु पश्चाच्छक्तिभिः स्वोपाधिभिः सह शयनं लयो निरोधः ।"—SR. The commentary of SR seems to support the reading अनु शयनम् whereas JG's exposition is in favour of अनुशयनम्. The different editions of BH also read either अनु शयनम् or अनुशयनम्. In the text we follow the reading supported by JG's exposition.

इति ज्ञेयम् । तत्रैव निरोधेऽन्यथारूपमविद्याध्यस्तमज्ञत्वादिकं हित्वा स्वरूपेण व्यवस्थितिर्मुक्तिः ॥५७॥

श्रीबलदेवविद्याभूषणकृता टीका ।

सर्गादीन् दश व्युत्पादयति—तदेवमित्यादिना । ब्रह्मणः परमेश्वरादिति । कारणसृष्टिः पारमेश्वरी, कार्यसृष्टिस्तु वैरिञ्चीत्यर्थः । मुक्तिरिति—भगवद्वैमुख्यानुगतयाऽविद्यया रचितमन्यथारूपं देवमानवादिभावं हित्वा तत्साम्मुख्यानुप्रवृत्तया तद्भक्त्या विनाश्य, स्वरूपेणापहतपाप्मत्वादिगुणाष्टक-विशिष्टेन जीवस्वरूपेण जीवस्य व्यवस्थितिर्विशिष्टा पुनरावृत्तिशून्या भगवत्-सन्निधौ स्थितिर्मुक्तिरित्यर्थः ॥५७॥

आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥

( भा० २।१०।७ )

आभासः सृष्टिः,निरोधो लयश्च यतो भवति, अध्यवसीयत उपलभ्यते जीवानां ज्ञानेन्द्रियेषु प्रकाशते च, स ब्रह्मेति परमात्मेति प्रसिद्ध आश्रयः कथ्यते । इति शब्दः प्रकारार्थः, तेन भगवानिति च । अस्य विवृतिरग्रे विधेया ॥५८॥

श्रीबलदेवविद्याभूषणकृता टीका ।

अथ नवभिः सर्गादिभिर्लक्षणीयमाश्रयतत्त्वमाह—आभासश्चेति । यत इति हेतौ पञ्चमी ॥५८॥

स्थितौ च तत्राश्रयस्वरूपमपरोक्षानुभवेन व्यष्टिद्वारापि स्पष्टं दर्शयितुमध्यात्मादिविभागमाह—

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ।
एकमेकतराभावे यदा नोपलभामहे ।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥

( भा: २।१०।८-९ )

योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः, स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः[1]। देहसृष्टेः पूर्वं करणानामधिष्ठानाभावेनाक्षमतया करणप्रकाशकर्तृत्वाभिमानितत्-सहाययोरुभयोरपि तयोर्वृत्तिभेदा[2]नुदयेन जीवत्वमात्राविशेषात्। ततश्चोभयः करणाभिमानितदधिष्ठातृदेवतारूपो द्विरूपो विच्छेदो यस्मात्, स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः[3]। "स वा एष पुरुषोऽन्नरसमयः" (तै० उ० २।१) इत्यादिश्रुतेः ॥५९॥

---

1 Each of the organs of human body is presided over by a particular deity. That is why even these brute organs are addressed in *śruti* as conscious beings. (Cf. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्—ब्र० सू० २।१।५). However, the presiding deities of the five sense-organs are referred to in the following manner—"विश्ववैश्वानरौ दिग्वातार्कप्रचेतोऽश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धान्.....स्थूलविषयाननुभवतः।" (वेदान्तसार, ११९-२२ पृ:, कालीवर )

2 Here भेद does not mean difference but it means विशेष (particular). The particular *vṛttis* are absent then. These *vṛttis* are expressly mentioned in the commentary by BD.

3 *Jīva* is a conscious being and this consciousness is dependent on the sense-organs ( इन्द्रिय ). A sense-organ e.g. the visual organ cannot function in the absence of the relevant limbs, the eye-balls etc. ( अक्षिगोलक ). Again this visual organ remains incapacitated unless it is impelled by the presiding deity, the sun ( सूर्य ). In this way *jīva* has threefold existence—being manifest through the particular limbs, through the sense-organs and through the presiding deities which are technically known as आधिभौतिक, आध्यात्मिक and आधिदैविक जीव respectively. This is said with reference to the stage when the body is created. But during the period when

श्रीबलदेवविद्याभूषणकृता टीका ।

ननु करणाभिमानिनो जीवस्य करणप्रवर्तकसूर्यादित्वमत्र कथम् ? तत्राह—देहसृष्टेः पूर्वमिति करणानामिति । अधिष्ठानाभावेन चक्षुर्गोलकाद्यभावेनेत्यर्थः । उभयोरपि तयोर्वृत्तिभेदानुदयेनेति—करणानां विषयग्रहणं वृत्तिः, देवतानान्तु तत्र प्रवर्तकत्वं वृत्तिः । अयमत्र निष्कर्षः—देहोत्पत्तेः पूर्वमपि जीवेन सार्धमिन्द्रियाणि तद्देवताश्च सन्त्येव, तदा तेषां तेषाञ्च वृत्त्यभावाज्जीवेऽन्तर्भावो विवक्षितः । उत्पन्ने तु देहे तयोर्विभागो यद्भवतीत्याह—ततश्चोभय इति ।।५९।।

'एकमेकतराभाव' इत्येषामन्योन्यसापेक्षसिद्धत्वे नानाश्रयत्वं दर्शयति । तथाहि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिध्यति, नापि द्रष्टा, न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादिः, न च तं विना करणं प्रवर्तते, न च तद्विना दृश्यमित्येकतरस्याभाव एकं नोपलभामहे ।[1] तत्र तदा तत् त्रितयमालोचनात्मकेन प्रत्ययेन

---

the body is not originated the visual organ remains inactive due to the absence of the eye-ball and consequently the presiding deity becomes functionless due to the absence of the sense-organ over which he could have presided. So during that period the sense-organ and the deity become identified with *jiva.*

The commentary of BD has been quite lucid here.

1 The object of knowledge (i.e. body etc ), the instrument of knowledge (the sense-organ), the knower and the presiding deities are mutually dependent on one another. The instrument requires an object for its being an instrument of knowledge of some *object*. Had there been no illuminated object, how could the imperceptible ( अतीन्द्रिय ) instrument be proved ? There being no instrument, perceptual knowledge would have been impossible and necessarily there could not have been any perceiver. In the event of the absence of instru-

यो वेद साक्षितया पश्यति, स परमात्मा आश्रयः। तेषामपि परस्परमाश्रयत्वमस्तीति तद्व्यवच्छेदार्थं विशेषणं स्वाश्रयोऽनन्याश्रयः। स चासावन्येषामाश्रयश्चेति। तत्रांशांशिनोः शुद्धजीवपरमात्मनोरभेदांशस्वीकारेणैवाश्रय उक्तः। अतः 'परोऽपि मनुतेऽनर्थम्' (भा० १।७।५) इति

जाग्रत् स्वप्नसुषुप्तञ्च[1] गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन विवक्षितः॥

(भा० ११।१३।२७)

इति 'शुद्धो विचष्टे ह्यविशुद्धकर्तुः' (भा० ५।११।१२) इत्याद्युक्तस्य साक्षिसंज्ञिनः शुद्धजीवस्याश्रयत्वं न शङ्कनीयम्। अथवा, नन्वाध्यात्मिकादीनामप्याश्रयत्वमस्त्येव? सत्यम्, तथापि परस्पराश्रयत्वान्न तत्राश्रयताकैवल्यमिति ते स्वाश्रयशब्देन मुख्यतया नोच्यन्त इत्याह—एकमिति। तर्हि साक्षिण एवास्तामाश्रयत्वम्? तत्राह—त्रितयमिति। स आत्मा साक्षी जीवस्तु यः स्वाश्रयोऽनन्याश्रयः परमात्मा स एवाश्रयो यस्य तथाभूत इति। वक्ष्यते च हंसगुह्यस्तवे "सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे" (भा० ६।४।२५) इति। तस्मात् 'आभासश्च', (भा० २।१०।७) इत्यादिनोक्तः परमात्मैवाश्रय इति। २।१०। श्रीशुकः ॥६०॥

---

ment no presiding deity is necessary as an impeller of it. Again, without impeller the instrument is inactive and without instrument the object is not perceived. Thus of these four the absence of any one causes the absence of the other.

But *Paramātman* is not dependent on anything else although others depend upon *Paramātman*.

1 BH reads जाग्रत् स्वप्नः सुषुप्तं च etc.

श्रीबलदेवविद्याभूषणकृता टीका ।

आध्यात्मिकादीनां त्रयाणां मिथः सापेक्षत्वेन सिद्धेस्तेषामाश्रयत्वं नास्तीति व्याचष्टे—एकमेकतरेत्यादिना । त्रितयमाध्यात्मिकादितित्रयम् । ननु शुद्धस्य जीवस्य देहेन्द्रियादिसाक्षित्वाभिधानेनान्यानपेक्षत्वसिद्धेस्तस्याश्रयत्वं कुतो न ब्रूषे ? तत्राह—अत्रांशांशिनोरिति । अंशिनांशोऽपीह गृहीत इत्यर्थः । अनन्तोपाद् व्याख्यान्तरमथवेति ।[1] तर्ही ति—साक्षिणः शुद्धजीवस्य । सर्वमिति—'पुमान्' जीवः ॥६०॥

अस्य श्रीभागवतस्य महापुराणत्वव्यञ्जकलक्षणं प्रकारान्तरेण च वदन्नपि तस्यैवाश्रयत्वमाह द्वयेन—

सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥

( भा० १२।७।९–१० )

अन्तराणि मन्वन्तराणि । पञ्चविधम्—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम् ॥"

इति केचिद्वदन्ति । स च मतभेदो महदल्पव्यवस्थया महापुराणमल्पपुराणमिति भिन्नाधिकरणत्वेन । यद्यपि विष्णुपुराणादावपि दशापि तानि लक्ष्यन्ते, तथापि पञ्चानामेव प्राधान्येनोक्तत्वादल्पत्वम् । अत्र दशानामर्थानां स्कन्धेषु यथाक्रमं प्रवेशो न विवक्षितः, तेषां द्वादशसंख्यत्वात् । द्वितीयस्कन्धोक्तानां तेषां तृतीयादिषु यथासंख्यं न समावेशः, निरोधादीनां दशमादिष्वष्टमवर्जम्, अन्येषामप्यन्येषु यथोक्तलक्षणतया समावेशनाशक्यत्वादेव । तदुक्तं श्रीस्वामिभिरेव—

1 Cf. सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम् ।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा ॥—तन्त्रवार्तिक १।३।४

"दशमे कृष्णसत्कीर्तिवितानायोपवर्ण्यते ।
धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥"

इति[1], "प्राकृतादिचतुर्धा यो निरोधः स तु वर्णितः ।"[2] इति । अतोऽत्र स्कन्धे श्रीकृष्णरूपस्याश्रयस्यैव वर्णनप्राधान्यं तैर्विवक्षितम् । उक्तञ्च स्वयमेव—'दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम्' इति । एवमन्यत्राप्युन्नेयम् । अतः प्रायशः सर्वेऽर्थाः सर्वेष्वेव स्कन्धेषु गुणत्वेन वा मुख्यत्वेन वा निरूप्यन्त इत्येव तेषामभिमतम् । "श्रुतेनार्थेन चाञ्जसा" इत्यत्र च तथैव प्रतिपन्नं, सर्वत्र तत्तत्सम्भवात् । ततश्च प्रथमद्वितीययोरपि महापुराणतायां प्रवेशः स्यात् । तस्मात् क्रमो न गृहीतः ॥६१॥

श्रीबलदेवविद्याभूषणकृता टीका ।

अस्येति । प्रकारान्तरेणेति—वर्णनिन्नामान्तरत्वादर्थान्तरत्वाच्चेत्यर्थः । एतानि दश लक्षणानि केचित्तृतीयादिषु क्रमेण स्थूलधियो योजयन्ति, तान्निराकुर्वन्नाह[3]—द्वितीयस्कन्धोक्तानामिति । अष्टादशसहस्रित्वं[4] द्वादशस्कन्धित्वञ्च भागवतलक्षणं व्याकुप्येत, अध्यायपूर्तौ भागवतत्वोक्तिश्च न सम्भवेदिति च बोध्यम् । शुकभाषितञ्चेद् भागवतं तर्हि प्रथमस्य द्वादशोपस्य च तत्त्वानापत्तिः । तस्मादष्टादशसहस्रि तत्पितुराचार्याच्छुकेनाधीतं कथितञ्चेति साम्प्रतं, संवादास्तु तथैवानादिसिद्धा निबद्धा इति साम्प्रतम् ॥६१॥

---

1 As this *śloka* and the following hemistich are continued quotations, the word इति after the first *śloka* is useless.

2 Beginning of SR's commentary on the tenth Skandha.

3 C reads तान्निराह.

4 The total number of *ślokas* in BH is 14,089 ; but it is sometimes said to contain eighteen thousand units (अष्टादश सहस्रित्व). The traditional explanation for this is that the BH contains 18,000 topics (विषयवाक्य).

अथ सर्गादीनां लक्षणमाह—

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ।
भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते ।।

( भा० १२।७।११ ) प्रधानगुणक्षोभान्महान्, तस्मात्त्रिगुणोऽहङ्कारः, तस्माद्भूतमात्राणां भूतसूक्ष्माणामिन्द्रियाणाञ्च, स्थूलभूतानाञ्च, तदुपलक्षिततद्देवतानाञ्च सम्भवः सर्गः । कारणसृष्टिः सर्ग इत्यर्थः ।

पुरुषानुगृहीतानामेतेषां वासनामयः ।
विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ।।

( भा० १२।७।१२ )

पुरुषः परमात्मा । एतेषां महदादीनां, जीवस्य पूर्वकर्मवासना-प्रधानोऽयं समाहारः—कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यते । व्यष्टिसृष्टिविसर्ग इत्यर्थः । अनेनोतिरप्युक्ता ।

वृत्तिर्भूतानि भूतानां चराणामचराणि च ।
कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ।।

( भा० १२।७।१३ )

चराणां भूतानां सामान्यतोऽचराणि, चकाराच्चराणि च कामाद्वृत्तिः । तत्र तु नृणां स्वेन स्वभावेन कामाच्चोदनयापि वा या नियता वृत्तिर्जीविकाकृता, सा वृत्तिरुच्यत इत्यर्थः ।

रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ।।

( भा० १२।७।१४)

यैरवतारैः । अनेनेशकथा, स्थानं, पोषणञ्चेति त्रयमुक्तम् ।

मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ।
ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ।।

( भा० १२।७।१५ )

मन्वाद्याचरणकथनेन सद्धर्म एवात्र विवक्षित इत्यर्थः। ततश्च प्राक्तनग्रन्थेनैकार्थ्यम् ।

राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।
वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ।। (भा० १२।७।१६)

तेषां राज्ञां ये च वंशधरास्तेषां वृत्तं वंश्यानुचरितम् ।।६२।।

श्रीबलदेवविद्याभूषणकृता टीका ।

उद्दिष्टानां सर्गादीनां क्रमेण लक्षणानि दर्शयितुमाह—अथेत्यादि । अव्याकृतेति—त्रिवृत्पदं महतोऽपि विशेषणं बोध्यम्। "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" (१।२।३४] इति श्रीवैष्णवात् । पुरुषः परमात्मा विरिञ्चान्तःस्थ इति बोध्यम् । स्फुटार्थानि शिष्टानि ।।६२।।

नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ।
संस्थेति कविभिः प्रोक्तश्चतुर्धास्य स्वभावतः ।।
( भा० १२।७।१७ )

अस्य परमेश्वरस्य । स्वभावतः शक्तितः । आत्यन्तिक इत्यनेन मुक्तिरप्यत्र प्रवेशिता ।

हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ।
यञ्चानुशयिनं प्राहुरव्याकृतमुतापरे ।। (भा० १२।७।१८)

हेतुर्निमित्तम् । अस्य विश्वस्य । यतोऽयमविद्यया कर्मकारकः । यमेव हेतुं केचिच्चैतन्यप्राधान्येनानुशयिनं प्राहुः, अपर उपाधि-प्राधान्येनाव्याकृतमिति ।

व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ।।
( भा० १२।७।१९ )

श्रीबादरायणसमाधिलब्धार्थविरोधादत्र च जीवशुद्धस्वरूपमेवाश्रयत्वेन न व्याख्यायते किन्त्वयमेवार्थः—जाग्रदादिष्ववस्थासु, मायामयेषु मायाशक्तिकल्पितेषु महदादिद्रव्येषु च, केवलस्वरूपेण व्यतिरेकः परमसाक्षितयान्वयश्च यस्य तद् ब्रह्म जीवानां वृत्तिषु शुद्धस्वरूपतया सोपाधितया च वर्त्तनेषु स्थितिष्वपाश्रयः, सर्वमत्यतिक्रम्याश्रय इत्यर्थः। 'अप' इत्येतत् खलु वर्जने, वर्जनञ्चातिक्रमे पर्यवस्यतीति। तदेवमपाश्रयाभिव्यक्तिद्वारभूतं हेतुशब्दव्यपदिष्टस्य जीवस्य शुद्धस्वरूपज्ञानमाह द्वाभ्याम्—

पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु।
बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम्॥
विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम्।
योगेन वा तदात्मानं वेदेहाया निवर्त्तते॥

( भा० १२।७।२०–२१ )

रूप-नामात्मकेषु पदार्थेषु घटादिषु यथा द्रव्यं पृथिव्यादि युतमयुतञ्च भवति, कार्यदृष्टिं विनाप्युपलम्भात्। तथा तन्मात्रं शुद्धं जीवचैतन्यमात्रं वस्तु गर्भाधानादिपञ्चतान्तासु[1] नवस्वप्यवस्थास्वविद्यया युतं स्वतस्त्वयुतमिति शुद्धमात्मानमित्थं ज्ञात्वा निर्विण्णः सन्नपाश्रयानुसन्धानयोग्यो भवतीत्याह—विरमेतेति। वृत्तित्रयं जाग्रत्-स्वप्नसुषुप्तिरूपम्। आत्मानं परमात्मानम्। स्वयं वामदेवादेरिव मायामयत्वानुसन्धानेन देवहूत्यादेरिवानुष्ठितेन योगेन वा। ततश्चेहायास्तदनुशीलनव्यतिरिक्तचेष्टायाः। १।७ श्रीसूतः। उद्दिष्टः सम्बन्धः॥६३॥

इति कलियुगपावन-स्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्-कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनभाजनश्रीरूप-सनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे तत्त्वसन्दर्भो नाम प्रथमः सन्दर्भः।

---

1. "बीजं गर्भाधानमादिर्यासां पञ्चता अन्तो यासां तासु देहावस्थासु नवस्वपि"—SR.

श्रीबलदेवविद्याभूषणकृता टीका।

पूर्वोक्तायां दशलक्षण्यां मुक्तिरेकलक्षणम्, अस्यान्तु चतुर्विधायां संस्थायां आत्यन्तिकलयशब्दिता मुक्तिरानीतेति। यच्चानुशयिनमिति—भुक्तशिष्ट-कर्मविशिष्टो जीवोऽनुशयीत्युच्यते। रूपेति मूर्त्या संज्ञया चोपेतेष्वित्यर्थः। कार्यदृष्टिमिति घटादिभ्यः पृथगपि पृथिव्यादेः प्राप्तेरित्यर्थः। अपाश्रयेति—ईश्वरध्यानयोग्यो भवतीत्यर्थः। स्वयमिति—वामदेवः खलु गर्भस्थ[1] एव परमात्मानं बुबुधे, योगेन देवहूतीत्यर्थः[2] ॥६३॥

इति कलीति—कलियुगपावनं यत् स्वभजनं तस्य विभजनं वितरणं प्रयोजनं यस्य, तादृशोऽवतारः प्रादुर्भावो यस्य, तस्य श्रीभगवत्कृष्णचैतन्य-देवस्य चरणयोरनुचरौ, विश्वस्मिन् ये वैष्णवराजास्तेषां सभासु यत् सभाजनं सत्कारस्तस्य भाजने पात्रे च यौ श्रीरूपसनातनौ तयोरनुशासनभारत्य उपदेश-वाक्यानि गर्भे मध्ये यस्य तस्मिन् ॥

टिप्पणी तत्त्वसन्दर्भे विद्याभूषणनिर्मिता।
श्रीजीवपाठसंपृक्ता सद्भिरेषा विशोध्यताम् ॥

इति श्रीमद्बलदेवविद्याभूषणविरचिता तत्त्वसन्दर्भटिप्पणी समाप्ता।

---

1 cf. गर्भे नु सन्नन्वेषामवेदम् (RV 4.27.1)

2 cf. सा चापि तनयोक्तेन योगादेशेन योगयुक्।
तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ (BH. 3.33. 13)
एवं सा कपिलोक्तेन मार्गेणाचिरतः परम्।
आत्मानं ब्रह्म निर्वाणं भगवन्तं तमाप ह ॥ (BH. 3.33. 30)

Here सा stands for देवहूति and तनय signifies कपिल, the son of देवहूति.

# APPENDIX A

**An Index of the Hemistichs of the Verses quoted in TS and BD's Commentary**

***The numbers indicate pages.***

# APPENDIX B

## An Index of the Works and Authors

*The numbers indicate pages.*

# APPENDIX C

## An Index of Important Words

*The numbers indicate pages.*

# APPENDIX D

## Addenda et Corrigenda

| | | | | |
|---|---|---|---|---|
| P. 2 | line 7 | read | विवर्तगर्तेन |
| " | " 13 | " | श्रीबादरायणो |
| " | " 15 | " | प्रत्यूहकुलाचलकुलिशं |
| " | " 15 | " | वाञ्छितपीयूषवलाहकं |
| P. 3 | " 1 | " | अङ्गे |
| " | " 22 | " | रूपसनातनौ |
| P. 6 | " 19 | " | कठ उ० |
| P. 7 | " 12 | " | स्वयंभगवान्[1] |
| P. 9 | " 15 | " | प्रत्यक्षानुमानशब्दार्षोप- |
| P. 11 | " 9 | " | दृष्टनरमायामुण्डकेन |
| P. 12 | " 5 | " | प्रवृत्तय: |
| P. 14 | " 15 | " | ईयसुन् |
| P. 15 | " 7 | " | तर्हीतिहासपुराण- |
| P. 17 | " 26 | " | नारदीयकम् |
| P. 18 | " 18 | " | पुराणम् |
| P. 22 | " 26 | " | Śāstras |

| | | | | | |
|---|---|---|---|---|---|
| P. | 28 | line | 18 | read | पुराणादिकं |
| P. | 29 | " | 17 | " | प्रणीयाप्य- |
| P. | 30 | " | 16 | " | पौर्णमास्यां |
| P. | 31 | " | 18 | " | हयग्रीवब्रह्मविद्या |
| P. | 33 | " | 8 | " | व्यानष्टे |
| P. | 36 | " | 26 | " | महाभारतमुच्यते |
| P. | 40 | " | 21 | " | तत्पर्याप्तेः |
| P. | 44 | " | 1 | " | विव्रियते[1] |
| P. | 48 | " | 13 | " | चादृतं |
| P. | 51 | " | 10 | " | अत्यादरगूनकत्वबहुत्वनिर्देशः |
| P. | 53 | " | 12 | read | योंजिता etc. |
| P. | 55 | " | 7 | " | राजर्षेर्मुनिना |
| P. | 62 | " | 2 | " | सर्वं |
| P. | 63 | " | 3 | " | तात्पर्यं |
| P. | 64 | " | 10 | " | श्रीबादरायण etc. |
| " | | " | 19 | " | स्थैर्य |
| P. | 66 | " | 7 | | The quotation ह्लादिनी.... गुणवर्जिते is from the Viṣṇupurāṇa 1.12.69-70. In the editions of this Purāṇa the second hemistich of śloka No. 69 ends with सर्वसंस्थितौ, and not with सर्वसंश्रये. |
| P. | 68 | line | 17 | read | Bhaṭṭācārya |
| P. | 76 | " | 1 | " | तदेवम् |
| " | | " | 4 | " | मतम् । |
| P. | 78 | " | 8 | add | (Para. 27-28) after तृतीयसन्दर्भे |
| P. | 81 | " | 16 | read | तस्यां for यस्यां |
| P. | 82 | " | 1 | " | निर्दग्धुमादातुञ्च |
| " | | " | 5 | " | चिद्रूपत्वेऽपि etc. |
| P. | 84 | " | 2 | " | तृतीया |
| " | | " | 11 | " | संयमाः |
| P. | 85 | " | 1 | " | यद्येव |

| | | | | | | |
|---|---|---|---|---|---|---|
| P. 86 | line | 12 | | | read | विविधविक्षेप etc. |
| P. 87 | " | 26 | | | " | remains |
| P. 89 | " | 10 | | | " | आदिमत्त्वापत्तेश्चेश्वर- |
| P. 94 | " | ७ | | | " | विना |
| P. 95 | " | 3 | | | " | कैवल्य उ० |
| " | " | 8 | | | " | सर्वेश्वराख्यः |
| P. 105 | " | 17 | | | " | *Subā-* |
| P. 108 | " | 7 | | | " | इत्युक्तब्रह्मविषयकम् |
| " | " | 16 | | | " | तुच्छीकृत्य |
| P. 115 | " | 24 | | | read | कठ उ० |
| P. 117 | " | 21 | | | " | *Īśvara* |
| P. 119 | " | 2 | | | " | स्वरूपनिर्देश etc. |
| " | " | 17 | | | " | established that |
| P. 122 | " | 8 | | | add | (P. xxi) after See Introduction xxiii |
| P. 123 | " | 24 | | | " | (P.xxi) after See Introduction xxiii |
| P. 127 | " | 8 | | | read | ब्रह्मपुरम् |
| P. 129 | " | 26 | | | " | स्थतः |
| P. 130 | " | 22 | | | " | holding that |
| " | " | 23 | | | " | the sun is both |
| P. 131 | " | 2 | | | " | ५४ |
| P. 140 | " | 12 | | | " | दशभिर्लक्षणैर्युक्तं |
| " | " | 27 | | | " | विषयव्याप्तिरेव |
| P. 142 | " | 8 | | | " | बीजाद् बीजं |
| P. 144 | " | 20 | | | " | देवहूत्यादि etc. |
| P. 148 | column | 2 | line | 25 | read | ततः स्मृतेयं |
| P. 150 | " | 1 | " | 24 | " | भतमात्रे etc |
| P. 153 | " | 1 | " | 21 | " | केनोपनिषत् |
| P. 157 | " | 2 | " | 15 | " | कूटस्थ |
| P. 157 | " | 2 | " | 19 | " | क्षणिक च |
| P. 158 | " | 2 | " | 3 | " | त्रिवृत् |

